श्री भोजदेवविरचिता

# शृङ्गारमञ्जरीकथा

## [ कथापीठिका ]

*[ मूलादर्शे प्रथमं पत्रमनुपलभ्यम् ]*

[ कदाचिद् ? ] † वसितप्राये वसन्तसमये, परिणतप्रसूनतया[१] कठोरितस्तवकेषु[२] माधवीमण्डपेषु, विरलविरलमाबद्धलघुकफलशालिषु सह[(1)]कारमञ्जरीजालकेषु, हूणरमणीकपोललावण्यलुण्टाकेषु विगलितप्रायेषु मधूकस्तवकेषु, प्रियतमनिपीतलाटीदशन[(2)]च्छदच्छायासादरेषु समुन्मिषत्सु पाटलाप्रसूनेषु, मन्देष्वपि मन्दतामाश्रयत्सु मलयानिलेषु, बाल्यमुत्सृजन्त्याः किमपि किमपि[(3)] ग्रीष्मश्रियः स्मितलवेष्विव विरलविरलेषु समुन्मिषत्सु मल्लिकामुकुलेषु, दोलान्दोलनकुतूहले शिथिलतामाश्रयति विलासि[(4)]नीनां श्रयति च स्पृहणीयतामम्भःक्रीडासुखरसे, आबद्ध[३]विन्दुप्रकरतया मन्दमन्दमरविन्देक्षणानां दन्तुरयति स्तनतटान्यनुदन्तुरे घ[(5)]र्मसलिलविसरे, शनैः शनैः प्रौढिमासादयति दिनभर्तुरनतिग्लपितशाद्वलश्या[(6)][ F. 2. A ]मलिम्नि किरणजाले क्रमेण चोन्मिषति ग्रीष्मारम्भे, प्रमदवनमध्यवर्तिनो धारागृहस्येन्दुमणिमयीं मध्यभूमिकामध्यासीनः कति[(1)]पयैर्विद्वद्भिराप्तैः प्रणयिभिर्नृपतिभिश्चोपास्यमानचरणकमलो महाराजाधिराजपरमेश्वर श्री भोजदेवः सविनयं प्रार्थ्यत;[(2)] यथा– 'देवोऽप्यखिलजनतासुबन्धुः[४] श्रीभासो गुणाढ्यः प्रशस्तगीर्वाणः। तदतिनिविड[५]कौतुकाचान्तचेतसामस्माकं प्रीत्यै व्युत्पत्तये च[(8)] कामप्यपूर्वां व्युत्पाद्य कथां कथयतु स्वामी' इति विज्ञप्तः स्मितपूर्वमिदमभ्यधात् 'एवमेतद्; किन्तु कथा हि कीर्त्यमाना नगरादिवर्णनपु[(4)]रःसराः सौन्दर्यमावहति। न चैतस्याः पुरीतोऽन्या विलक्षणा काचिदप्यस्तीति प्रथममेषैव वर्णनीया भवति। अस्याश्चाधिष्ठातृत्व[(5)]प्रसङ्गेनात्माऽपि भणनीयः। तच्चानुचितमिवास्मादृशाम्।' इति श्रुतस्वामिवचनैस्तैः पुनरपि व्यज्ञप्यत[६]–'यथा एतद्देवो जानाति न तथा[(6)][ F. 2. B ]स्मादृशाः। इदमखिलैरप्यलङ्कारकारैरभ्यधायि यथा–

"स्वगुणाविष्क्रिया[७]दोषो नात्र भूतार्थशंसिनः"– इति।

तथा हि–मुनिभिरपि वाल्मीक-परा[(1)]शर-व्यासादिभिः, कविभिरपि गुणाढ्य-भास-भवभूति-बाणप्रभृतिभिरात्मगुणाविष्करणमक्रियत। असद्गुणख्यापनं हि दोषाय। यथार्थ[(2)]गुणाख्यानं पुनरनवगीतमेव' इत्यभिहिते तानवादीत् 'भवन्तोऽपि नाविज्ञास्तद्यदि भवता[८]मनवगीतमेतत् प्रतिभासते तदाऽऽवेदयामः; श्रू[(3)]यताम्।

---

† अस्याः कथाया आदर्शभूतायास्ताडपत्रीयप्रतिलिपेः प्रथमं पत्रं नोपलभ्यते। द्वितीयपत्रस्य प्रथमपंक्ताविद्माद्यमक्षरं विद्यते। अतोऽर्थानुसन्धानं विचिन्त्य कल्पनयाऽत्र कोष्ठकगतान्यक्षराणि समुपन्यस्तानि।

१ पसूनतया। २ कण्ठोरितत्स्तवकेषु। ३ अवद्ध°। ४ सवन्धुः। ५ निवड°। ६ व्यज्ञप्यते। ७ °विक्रिया°। ८ भवतम°।

## [ धारानगर्या वर्णनम् ]

अस्त्यत्र निखिलभुवनैकललामभूताद्भुतनिजविभवापहस्तितत्रिदशनगरीविभूतिः प्रतिनिशमुत्तुङ्गसौधचन्द्रशालासञ्चारि[1] पौररमणीवदनेन्दुसहस्रैरेकेन्दुबिम्बमुपहसन्तीव दिवमुल्लसद्विमलस्फटिकोपलवेश्मरश्मिसन्तानैः स्फुरन्मरकतमणिप्रासाद[5] मयूखजालकैश्च निसर्गविरुद्धयोरपि तमश्चन्द्रिकयोः प्रतिविपणीमैत्रीमिव सम्पादयन्ती, विपुलवियद्विलङ्घनश्रमखिन्नवपुषां रवि[6] [F. 3. A] रथतुरङ्गमाणां प्रतिसौधमनिलचटुलैर्ध्वजपटपल्लवव्यजनैः स्वेदसलिलमिव व्यपनयन्ती, जीवितमिव वसुन्धरायाः, सारमिव संसारस्य, सर्व[1] स्वमिव विश्वस्य, विश्वासस्थानमिव सकलसम्पदाम्, आवासभूमिरिव विलासश्रियाम्, आभरणमिव भुवः, आश्रय [इ]व च त्रिवर्गस्य, सर्गशालेव निसर्ग[2] कमनीयकामिनीजनस्य, प्रधानं निधानमिव रामणीयकस्य, निखिलजनलोचनानाममृतरसधारा धाराभिधाना नगरी।

यस्यां च पा[3] ण्डुः स्फटिकवेश्मनामुन्मुखसञ्चयो विशराभः सुभद्राभिराममर्जुनमजनयद्दिशां चक्रवालम्। यस्यां च संवर्ग्यते मरकतमणिकुट्टिमैः, विच्छिद्य[4] ते स्फटिकप्रासादभूमिभिः, जर्जरीक्रियते कनकसौधोत्सङ्गैः, निपीयते पौरनारीवदनेन्दुचन्द्रिकाभिः, आप्याय्यते वातायनोद्गतागुरुधूप[5] धूमजालैः, उपचीयत इवोपवनैः, छिद्यत इव जयकुञ्जरदशनकिरणविसरैः, निधीयत इवेन्द्रनीलमणिभूमिगृहकेषु प्रतिरजनि तमः[6]। [F. 3. B]

यस्यां च सौधोत्सङ्गेष्वरुणमणिकुट्टिमसङ्क्रान्ताः शशधरमरीचयः सौगन्धिकवनभ्रान्तिं प्रतिनिशमुत्पादयन्ति मुग्धव[1] निताजनस्य। या चोल्लसन्तीभिरमलस्फटिकप्रासादपरम्पराकान्तिभिरुपहसतीव त्रिभुवनेऽपि पुरातनान्यखिलनगरसंनिवेश[2] स्थानानि। या च सस्पृहमालोकयतः प्रासादमयमिव भुवनतलं केवलम्, सौधमय इव नूतनः सर्गावतारः, विधेर्दीर्घिकामयमिव म[3] हीमण्डलम्, उपवनमयमिव दिशां चक्रवालम्, पताकामयमिव गगनाङ्गणं प्रतिभासते जनस्य।

यस्यां च स्फटिककुट्टिमेष्वस्तमिता इव,[4] मरकतमणिप्राङ्गणेषु निपीता इव, शोणमणिवेश्मवेदिकाविटङ्कोदरेषु क्रान्तसन्ध्याजलधरा इव, कालागुरुधूपधूमश्यामलेषु[5] स्फटिकवातायनेषु सहरिणच्छाया इव, वलभिकाचन्द्रमणिप्रणालीषु द्रुता इवाभिलक्ष्यन्ते प्रतिरजनि चन्द्रमसो रश्मयः।

यस्यां[6] [F. 4. A] च जातप्ररोहा इव रुक्मनिर्यूहेषु, प्ररूढकाण्डा इव कार्तस्वरकेतुदण्डेषु, पल्लविता इव स्फुरदरुणमणिवेश्मशिखरशिखाशयेषु,[1] कुसुमिता इव निर्मितारुणमणिगणासु काञ्चनहंसपालिषु, फलिता इव प्रोल्लसदष्टापदघटितप्रासादकनककाण्डपिण्ड-

---

१ बिम्बामुप॰। २ ॰ध्वंज॰। ३ ॰साया:। ४ भूधाराश्रयव च। ५ आप्याज्यते। ६ भ्रान्ति।
७ प्राकासादपरपराकान्तिभिरुप॰। ८ संस्पृ॰। ९ स्पटिक॰। १० दूता। ११ निमिता।

केषु,[2] दिवापि ज्योत्स्नायन्ते स्फटिकोपलभित्तिभागेषु निपत्योच्छलन्तः, स्थलनलिनायन्ते सङ्क्रम्योद्भवन्तः कुरुविन्दमणिमेदिनीषु, कैरवा[3]यन्ते विमलमुक्ताफलविटङ्कवेदिकासु निपत्य व्यावर्तमानाः, नीलोत्पलायन्ते शक्रनीलमणिचन्द्रशालासु संमूर्च्छन्तः, बालातपायन्ते[4] विद्रुमरचितासु क्रीडाभवनभूमिषु, दीप्यन्त इव कनकसौधशिखरोत्सङ्गेषु सङ्क्राम्योल्लसन्तः, निर्वान्तीव गारुत्मतरत्नवलभिका[5]सु, आच्छाद्यन्त इव कालागुरुधूपधूमपटलेषु, नगरीसंरक्षणार्थमभितः समुत्पादितसुरचापसहस्रा इवान्योन्य[6][F. 4 B] व्यतिकरितविचित्रभवनमणिमरीचिसञ्चयैः प्रतिदिवसमहिमकरगभस्तयः।

यस्यां तुङ्गसौधोत्सङ्गसङ्गिनीनामङ्गनानां मणि[1]वलयझात्कारसंवलितं सङ्गीतध्वनितमाकर्ण्य च स्तिमिततां भजति हरिणे गमनपर्याकुलो भवति प्रतिरजनि रजनिकरः। ता[2]सामेव नृत्तवशविसंस्थुलोन्नमितभुजलतानां मणिकङ्कणकिरणरज्जुभिर्बन्धखेदमननुभूतमनुभाव्यत इव लाञ्छनकुरङ्गः।

या चान[3]वरतहूयमानमखशतानलोच्छलद्बहलधूमपटलश्यामलितगगनतलतया समुल्लसन्महाधीर ( महीधर ? ) ज्वालाजटिलितदिक्तट[3]...[4][स]देवाबद्धप्रावृडाडम्बरा। क्वचिदनवरतधर्मव्यापारसञ्चरच्छ्रोत्रियपरम्परापरिगततया पठ्यमानखिलनिगमध्वनिव[4]......[5]याव्याख्यायमानाखिलपुराणेतिहासश्रुतिस्मृतितया च ब्रह्मलोकायते, क्वचिद्यौवनमदमत्त[6] [F. 5. A] कामिनीचरणालक्तकपाटलितस्फटिककुट्टिमतया स्थलेऽपि जलकमलशङ्कामुत्पादयन्ती, प्रतिगृहमनवरतप्रवृत्तसंगी[त][5]......[1][ग]म्भीरनिनादतया अतिबहलनीलकुसुमवाटिकाविटपिश्यामलितभवनोपशल्यतया च शिखण्डिनीनां ताण्डवपाण्डित्यमु[6]......[2]दयन्ती, प्रणयकलहकुपितासु कामिनीषु प्रसादनोपायचतुरदूतीव्यापारबहुलतामुपदिशन्ती, प्रियतमाभिसरणव्यग्रा[7]....[3][ह]रिणीदृशामाभरणसम्पादनाय सखीजनमुत्सुकयन्ती मदनलोकायते। क्वचित् पातालायते भोगिभिर्भुजङ्गैः। क्वचिदमरलोकायते[4] भानुगामिभिर्मरुद्भिः।

यत्र च प्रभञ्जन इव विधृतक्षमः, जलधिरिव विधुततापः, पौलस्त्य इव विभीषणत्यक्तवसतिः, दर्शनिशासमय इव[5] विधुरविरहितः, वसन्त इव रुचिरकाञ्चनारचितशोभः, ग्रीष्म इव प्राप्तशुचिसङ्गमः, प्रावृट्समय[6] [F. 5 B] इवादृष्टोग्रकरः, शरत्समय इव निर्म्मलाम्बररुचिः, तुहिनर्तुरिव सदा समहिमोपचितः, शिशिर इव सर्वदा[8] तापरहितः, माकन्दोऽप्यशोकः,[1] सरलोऽप्यरिष्टः, सुग्रीवोऽपि सुमित्रानन्दनः, विरोचनोऽप्यमृतमयः, परमेश्वरोऽप्यनुग्रः, भूतनयोऽप्यवक्रः, मुक्तामयोऽप्यखिलरत्नाल[2]ङ्कृतः, सकलव्यवहारपेशलः पौरलोकः।

---

१ °करिति°। २ लीच्छन°। ३ विनष्टान्यत्र द्वित्राण्यक्षराणि। ४ विनष्टान्यत्र पञ्चषडक्षराणि ५ विनष्टान्यत्र पञ्चषडक्षराणि। ६ विनष्टान्यत्र चतुःपञ्चाक्षराणि। ७ विनष्टे अत्र द्वे अक्षरे। ८ सर्वदा°।

या च तुहिनशैलेनेव प्रालेयधवलेन, दशकन्धरेणेव स्खलितर्क्षराजेन, विन्ध्याचलेनेव निरु[3]द्धतपनमार्गेण, सर्वतो विचित्रमणिकान्तिसन्तानसंवलितनिजतटाभोगेन, पुरीरक्षार्थमिव सततमधिज्येन, आखण्डलकार्मुकेणेव परिम[4]ण्डलतामुपगतेन, विततघनकपाटोपशोभिताभिरनेकजनसहस्रसङ्कुलाभिः पुरीविलोकनकुतूहलादुपगताभिर्दिग्भिरिवा-[1]........[5]भिश्चतसृभिः प्रतोलिभिः सनाथीकृतेन त्रिभुवनेऽप्यसदृशाकारेण प्राकारेण वलयिता ।

या च क्वचिदुत्तुङ्ग[6] [F. 6. A] [कपि]शीर्षकप्रान्तोल्लसद्बहलपुष्परागकिरणविसरैः सम्पादितदिनच्छायतया सदैवावियुक्तचक्रवाकमिथुनया सदैवोत्फुल्लकमलखण्डया,[1] क्वचित् प्राकारमरकतमणिप्रभाजालबहलान्धकारजनितरजनिभ्रमतया सदैव विकसितनीलोत्पलवनया, क्वचिदरुणमणिविनिर्म्मित[2]शालाट्टालकमयूखच्छुरितसलिलतया मज्जत्पुरविलासिनीकुचकलशकुङ्कुमारुणितयेव, क्वचित् सङ्क्रान्तस्फटिकशालवलयप्रतिबिम्ब[3]तया नगरीविलोकनकुतूहलाकुलितनिर्यच्छेषयेव परिखया परिक्षिप्ता ।

यस्यां च विकचकमलकुमुदकल्हारेन्दीवरपरागपुञ्जपि[4]ञ्जरितपयांसि सज्जनमनांसीवातिस्वच्छानि, दुर्जनमनांसीव दुरवगाहानि, उद्दण्डपुण्डरीकखण्डोड्डीनमधुकरमधुरझङ्कारहारीणि, क्रीडामज्जत्पु[5]रजनविलासिनीकुचकलशगलितमलयजरसामोदसुरभीणि, सौगन्धिकगन्धलुब्धमधुकरश्रेणि[6][ F. 6. B ]श्यामलितोपान्तभागानि, स्फटिकमणिशिलासु स्नानागतपौरनारीजनप्रतिबिम्बतया जलक्रीडार्थमुन्मज्जन्तीभिः पातालकन्यकाभिरिवा[1]धिष्ठितानि, प्रतिरजनि मदनालसचक्रवाककामिनीभिः प्रियतमभ्रान्त्या सस्पृहमालोक्यमाननिजप्रतिबिम्बकानि, मुकुलितकुमुद[2]कोशकोटरान्तनिलीनमधुकरतया दिवसकरभयात् प्रतनुतां गतेनान्धकारेणेव संश्रितानि, भूरुहकमलिनीदलच्छायानिलीनाभिर्म्म[3]रालमालिकाभिर्दिनकरकरोपमर्दभीताभिर्विकचकुमुदकान्तिभिश्चन्द्रिकाभिरिव निषेव्यमाणोपशल्यकानि, अगाधातिस्वच्छसलिला[4]न्तर्दृश्यमानसफरग्रासगृध्नुतया मुहुर्मुहुर्दत्तविफलफालैस्तदप्राप्त्या वञ्चमानैर्मुग्धबककुलैरुपसेव्यमानानि, सविषाण्यप्यमृत[5]स्वादूनि, प्रवृद्धान्यपि समकरचिह्नानि, सकमलान्यप्यकमलानि, द्विधापि शतपत्राधिष्ठितानि, द्विधापि सवनानि, द्विधापि कुवलयम[6] [F. 7. A]नोहारिणि, द्विधापि विततानि, क्वचिद्विकसितो[1]द्दण्डपुण्डरीकखण्डतया हसन्तीव, क्वचिदमन्दमारुतान्दोलितो[1]द्दण्डरक्तोत्पलतया नृत्यन्तीव, क्वचिद्वीचिवलयान्तर्गतविकचेन्दीवरतया सभ्रूक्षेपात् कटाक्षाक्षीपूर्न्[4] विक्षिपन्तीव, क्वचिदनल्पलहरीसंघ[2]ट्टजर्ज्जरितसलिलोन्मृष्टसीकरासारतया धूलिमुत्सृजन्तीव, क्वचिदुभयतो विवर्तमाननिविडमारुताभिघट्टिततरङ्गोद्भटध्वनितेना[3]रटन्तीव—इत्थमुन्मत्तचेष्टितमिवानुकुर्वन्ति सरांसि ।

---

१ विनष्टे अत्र द्वे अक्षरे । २ वर्हकमलिनी । ३ °तोदण्ड° । ४ कटाक्षाक्षिक्षु ।

यस्यां च क्रीडापुष्करिणीवीरविलासोद्यानप्रभृत्यनेकरमणीयसंनिवेशायां नन्द-(4)नवनमध्यवर्तिविमलमणिनिर्मिताासु पर्यन्तभित्तिषु प्रतिफलितमूर्तितया दिवसकरताप-भियेवातिसुकुमारान्[1] शरणागता(5)नन्तःप्रवेश्यारक्षद्विवोपवनपादपान्, अनेकधारासहस्र-सम्पातजन्मना परितः समुत्सर्प्पता शैत्येनावरभङ्गभयाद् दूरादेव[2] प्रवि (6) [F. 7. B] [श]तो जनस्याभ्युत्थानमिव प्रतिदिशं कुर्वाणम्, उपरितनविटङ्कवेदिकास्वभितः समुल्ल-सन्तीभिर्मरकतमणिकान्तिभिर्दूरत एव निखिलभुव(1)नसन्तापकारिणां तपनतेजसां विनि-वारणाय वियति वारिदवृन्दानीव निर्म्मापयद[3]सितमणिनिर्म्मित[4]तयोरुभयभागयोर्द्वारस्य(2) प्रतिविम्बितो(?) विपिन[5]पल्लवव्याजात् प्रविशतो जनस्य सन्तापज्वलनमाच्छिद्य बहिरिव स्थापयत्, सव्या[पा]राभिरचित[6]मणियन्त्रपुत्रिका(3)भिः पुरातनस्य वेधसस्त्रिभुवनेऽपि सृष्टिप्रपञ्चमिवोपहसत्, आस्थानभवनमिव वरुणस्य, सङ्केतनिकेतनमिव शिशिरसमयस्य(4), मङ्गलगृहमिव हिमाचलस्थलीदेवतानाम्, अस्तमयस्थानमिव ग्रीष्मोष्मणः, विलासमन्दिर-मिव मकरकेतोः, क्रीडागारमिव शृङ्गार(5)सागरस्य, प्रवृत्तिस्थानमिव प्रावृषः, उत्पत्ति-पत्तन[7]मिव व्युत्पत्तेः, सर्वस्वमिव रामणीयकस्य, विलासम (6) [F. 8. A] णिदर्प्पणो विदग्धता[8]याः, वाहेयक(?)मन्दिरं विलासानाम्, अतिशिशिरतया कर्पूरक्षोदैरिव निर्म्मितम्, हिमानीभिरिव विरचितम्, हिमांशुश(1)कलैरिव निष्पादितम्, गन्धाम्बुभिर्जनितातिसुरभि-तया च बकुलकुसुमामोदैरिवोत्पादितम्, कक्कोलफलक्षोदैरिव निर्म्मितम्, ल(2)वङ्गकुसु-मैरिव जनितसंनिवेशम्, एलाफलरसैरिव विहितधारम्, सर्वतः प्रसृतवारिधारासहस्रतया विधातुर्वारिमयीमिव सृष्टिं(3) प्रदर्शयत्, अगम्यं[9] दिनकरकरा[10]णाम्, अदत्तप्रवेशं सन्ता-पस्य, अनभिभवनीयं विरहिजनाकल्पकस्य, दुःप्रेक्ष्यं विरहिणीविरहदावद(4)हनस्य, शैत्य[11]स्यापि शिशिरोपचारस्थानम्, सुखानामपि सुखायतनम्, रामणीयकस्यापि रामणीय-कम्, सर्वतः समुद्गतानां परस्परप्र(5)हतिविस्फुटनविसृताण्र्णसां धारासहस्राणां परितः समुल्लसितसीकरासारतया कर्प्पूरक्षोदमिव दिक्षु विक्षिप(6)त्, [F. 8. B] चन्द्रमणि-घटितजलयन्त्रपुत्रिकानिष्यन्दहेतोर्ज्योत्स्नामिव विकिरत्[12] मिहिकानिवहमिव, समुद्गमद्धवल-मणिमयूखसंवलितसलि(1)लतया मलयरजसमयीरिव धाराः समुद्गिरद्, विस्फुटितकमल-भरभग्नोपरितनकमलिनीमृणालभङ्गेभ्यो विनिर्गतानि विसतन्तु(2)सूत्राणीव धाराशतानि विभ्राणम्, स्तम्भस्तम्भशीर्षकपट्टसालभञ्जिकानां[13] परस्परसुसंहततया सु[सं]स्थानतया निविडसन्धिबन्धतया च नानार(3)त्ननिर्म्मितमप्येकरत्नोपलघटितमिव[14] भुवो निर्गतमिव [15]कृत्रिममपि चाकृत्रिममिवोपलक्ष्यमाणम्, निधानं वृत्तेः, उद्गमस्थलं[16] सलिलधा[रा](4)-लतानाम्, आवासभवनं भुवनश्रियः, [17]प्रमदवनं प्रमोदस्य, विकचकाञ्चनकमलकोशकोटर-

१ °कुमारान्तःशरणा° । २ °देवे । ३ °पदाद । ४ निर्म्मिततयो° । ५ विपन° । ६ °रचितो मणि° । ७ °पतन° । ८ °धतया. । ९ अगम्य । १० °वाराणम् । ११ स्यैतस्यापि । १२ विकिरिन् । १३ भंजिकान्य । १४ °तनिव । १५ भृत्रिम° । १६ रूद्गमस्थल । १७ प्रसद° ।

विनिर्गताभिस्तदंशुसंवलितमूर्तित[1]....[(1)]कारगौरीभिरम्भसो धाराभिः कुङ्कुमरसविसरमिवोत्सृजद्, अरुणमणिपट्टप्रान्तप्रवृत्तमनवरतमसृणधारासन्ताननतया मु[3]...[(6)] [F.9. A] परितः प्रालम्बानिव प्रकटयद्, उत्पत्य[5] निपतन्तीनां सलिलधाराणां स्फुटितस्थूलानवरतनिपतज्जलकणतया अपरमिव मु[6]....[(1)]ताकरमुत्पादयत्, मरकतमणिप्रभाश्यामलितगगनतया यन्त्रपुत्रकप्रहतमुरजोन्मुक्तमन्द्रमधुरध्वानतया अनवरतनि [पतत् स][(2)]-लिलधारान्धकारितदिगन्तरतया च जनितजलद[7]भ्रमान् आवद्धमण्ड[8]लान् उपवनशिखण्डिनस्ताण्डवयद्, असितमणिकान्तिजालकैरुल्लस[द्भि][(6)] र्व्यतिकरितव[9]पुषः सकालागुरुधूपधूमा इव सलिलधाराः समुत्[10]सृजद्, यन्त्रपुत्रिकाकरतलोद्गताभिरम्भसो धाराभिस्त्रिभुवनविजयो-[(4)]द्यतस्य स्मरनरपतेर्ज्यावल्लीसहस्राणीव निर्म्मापयद्, राकाशशाङ्कमण्डलमखिलजननयननीलोत्पलानाम्, वारुणास्त्रसदनं[11] मन्म[(7)]थस्य, नि[12]वृत्तिक्षेत्रमिन्द्रियग्रामस्य, खनिः सुखानाम्, आस्पदमानन्दस्य, मन्दिरं सुन्दरतायाः, क्वचिद् विकचकृत्रिमाम्भोजिनी[13]-मध्यमध्यासी[(6)] [F. 9. B]नाभिर्धवलमणिमयीभिर्मुग्धमरालिका[भिः] विसकाण्डभ्रमादिव विदश्यमानधाराजलम्, क्वचिद् विकचकुमुदकाननच्छलेन हसदिव, क्वचित् क्री[(1)]डासा[14]रिकोल्लासितभुजलताभिर्मणियन्त्रपुत्रिकाभिर्नृत्यदिव, क्वचिद् विकचसौगन्धिककर्णिकाभ्यर्णव[15]र्तिभिरसितमणिनिर्मितैर्गुञ्जद्भिः[(2)]र्यन्त्रमधुकरमिथुनैर्गायदिव, क्वचिद् दिवापि चन्द्रातप[16]भ्रमात्तर्पतरलितमनोभिर्विवृतचञ्चुपुटैरु[17]पवनचकोरकैराचम्यमानस्फटिक[(3)]स्तम्भकान्तिसन्तानम्, क्वचित् पत्रमकरिकानेत्रप्रान्तेभ्यः, क्वचिदधोमुखमयूरीमुखेभ्यः, क्वचिन्मणिमययन्त्रपुत्रिकापयोधरद्वन्द्वेभ्यः, [क्वचि][(4)]न्मज्जनोत्ती[18]र्णस्वर्णपुत्रिकानिश्च्योत्यमानकबरीवा[लक]लापप्रान्तेभ्यः, क्वचिन्मणिमयविलासिनीनखमुखेभ्यः, क्वचित् प्ररुदितवा[19] .. ....[(5)], क्वचित् यन्त्रवृक्षकं प्रत्यावद्धफालस्य कपिकुटुम्बकस्य वदनविवरेभ्यः, क्षितितलाद् भित्तिभागेभ्यो भित्तिनलिनीवामल[20]........[(6)] [F. 10. A] उपरितनकमलिनीभ्यो मणिपुत्रिकाभ्यः स्तम्भेभ्यः स्तम्भशीर्षकेभ्यश्च द्वित्रिविसिनीसूत्रतन्तुसंवलनमांसलाः सर्वतो विनि[21]........[(1)]राविश्राणम्, अदभ्रैर्विविधमणिकान्तिजालकैरिन्द्रचापसहस्रनिर्म्माणार्थमपरमिव परितो विचित्रवंशीवनमुत्पादयत्[22],...[(2)][मरक]तमणिस्तम्भोद्गतैः किरणमञ्जरीजालकैरावद्धजलधराडम्बरमन्तरान्तरोल्लसितैर्विसारिभिः शोणमणिमयूखदामभिः सम्पादि[ताचि][(3)]रप्रभाविलसितमनवरतनिपतद्धारासहस्रोल्लसितध्वनितयाऽन्धकारितदिक्तटतया च वर्षासमयमिव विडम्बयत्, क्वचिदङ्गणवापि[का][(4)]पुष्करिणीनामन्तरुन्मज्जन्निमज्जन्तीभिर्वालशफरिकाभिर्विप्रलभ्यमानकृत्रिमबककुटुम्बकम्, क्वचिद्

---

१ °ताभिमूर्द्दंशु°। २ विनष्टान्यत्र त्रीण्यक्षराणि। ३ विनष्टान्यत्र द्वित्राण्यक्षराणि। ४ न्यरित.। ५ °त्पहत्य°। ६ विनष्टान्यत्र त्रीण्यक्षराणि। ७ °दुलद°। ८ °मद्वालान्°। ९ ववपुषः। १० समुत्त्र°। ११ °मदनं। १२ निवृत्ति°। १३ °म्भोजनी°। १४ °सारको°। १५ °वर्धिभि°। १६ °तपत्रमा°। १७ उपवम°। १८ °नोतीर्ण°। १९ विनष्टान्यत्र चतुःपञ्चाक्षराणि। २० विनष्टान्यत्र चतुःपञ्चाक्षराणि। २१ विनष्टान्यत्र चतुःपञ्चाक्षराणि। २२ विनष्टे अत्र द्वे अक्षरे।

निमज्जनोन्मज्जनैः दृश्यादृश्यबाल[6]यन्त्रकमठम्, क्वचिद् दिदृक्षारसकुतूहलाकुलिताभिरपि मत्स्या[१]ङ्गनाभिरनिक्षिपन्तीभिश्चरणकमलमीषत्त्रासादिवावलोक्यमानोन्म[6] [ F. 10. B ] ज्जद् यन्त्रमकरम्, क्वचिदन्तःस्थितानां भित्तिकमलिनीकुड्मलानां विकासार्थं बालातप-च्छेदानिव शोणमणिकिरणजालकान्युद्वहत्, परस्प[1]रप्रतिफलितमूर्तितया सम्भूयेव भारसमुद्वहद्भिरन्योन्यकल्पितावष्टम्भैर्मणिस्तम्भैरध्यासितमध्यभागम्, अतिमनोरमतया कौतु[2]काक्षिप्तहृदयैरिवानिमेषदृष्टिभिः परितो भारपुत्रकैरप्यवलोक्यमानम्, विचित्रं तौर्यत्रिकमारचयद्भिर्यन्त्रचारैरतिविदामपि[3](?)[२]चित्तभ्रममुत्पादयद्, विचित्रयन्त्रदर्शनो-द्भ्रान्तचे[३]तसो भित्तिघटितविकसितसितसरोजव्याजादुपहसदिवातिविचक्षणानपि प्रेक्षकान्, सा[4]न्द्रमृगमदपङ्कोपरुद्धकलाः(?) कर्पूरक्षो[द]सिकतावतीरनच्छमलयजद्रवसुरभिताम्भः-शोणमणिमञ्जरीविसंवलितमरकतमयूखकमलिनी[5]वनाः परितः परिसरक्रीडानदीर्बिभ्राणं यन्त्रधारागृहकमुन्मदयति मनांसि पौरलोकस्य ।

यस्यां च सततातिनीलतया बहलच्छायत[6][ F. 11. A ]या चागणितदिवाकर-करैस्तमोभिरिवाधिष्ठितानि, अनवरतमुद्भिद्यमानाभिनवपल्लवतया सदैव पौरपुरन्ध्रिजना[४]-वलोकनव्यक्तिभूतानु[1]रागैरिव तरुभिरलङ्कृतानि, मधुरमधुकरझङ्कारकोलाहलच्छलेन मकरध्वजविजयराज्यघोषणमिव कुर्वाणानि, कुसुमावचयार्थ[2]मितस्ततः सञ्चरन्तीभिः सततसन्निहितवनदेवतानीव पौररमणीभिरुपवनानि ।

—इत्यभिधाय 'रे यन्त्रपुत्रक ! यद्यप्यसत्परिप[3]दः सम्मतं तथापि निजगुणा-विष्करणमवगीतमिव प्रतिभासते । तद् राजवर्णनं भवानेव भणतु'— इत्यभिहितस्तैर्विस्म-यस्तिमितलोचनैरासन्न[4]वर्तिभिः प्रणयि[५]भिरालोक्यमानः स भणितुमारेभे ।

## [ यन्त्रपुत्रकभणितं धाराधीशभोजदेववर्णनम् ]

अस्ति तस्यां प्रणतसकलभूपालमौलिमालारुणमणिमरीचिनिचयपा[६]टलितपाद[5] पीठो निजभुजो[७]द्दलितदुर्म्मदरिपुविलासिनीनयनबाष्पसलिलसेकैरनवरतप्रवर्ध्यमानकीर्ति-लतावितानोऽसितनिस्त्रिंशप्रहार[6] [ F. 11. B ] विदलितरिपुकुम्भिकुम्भस्थलोच्छलितैर्दि-वापि मु[८] ❀ ........................................................................ [1]
भिर्मु[९]कुटकोटिसङ्घट्टविगलितमाणिक्यनिकर ❀ ........................................ [2]
इव करवालां(?)गारक[१०] इव वसुधानन्दनः, बुध[११] इव राज ❀ ....................शुरप्रभवः राहु[3]-रिव ग्रस्ततेजस्विमण्डलः, केतुरिवाद्भुतोदयः, नवग्रहम❀. ....................कृतनितम्बाभोगा[१२][4]-

१ मुत्सङ्गनाभि° । २ चौरतिविढत । नामयि चित्त° । ३ सेतसो । ४ °जमाव° । ५ प्रणसिभि° । ६ पातलित । ७ निजभुवनोद्द° । ८ द्वादश (१२) अङ्काङ्कितस्य पत्रस्य त्रुटितत्वादिमान्येव वाक्यानि पठ्यन्ते । यत्र एतादृश- '❀' फुल्लिकाकारोऽस्ति तत्राग्रे समग्राऽपि पंक्तिर्विनष्टेति सर्वत्र ज्ञेयम् । ९ मकुट° । १० कला-वालंगारक° । ११ रुध° । १२ °भोगा° ।

भिरामायाः[१] भूमेरेकभर्ता,समरश[२] तदुर्ल्ललितदोर्दण्डचण्ड ❀..........कीर्तिमिषाने[३][(5)]-
[४]..........पवित्रितत्रिलोकीतलो यौवनमदरुद्धक[५] ❀. ..............[(6)] [F. 12. A]
........लावण्यपीयूषसलिलो निस्त्रिंशसलिलनिर्मग्न[६] ❀..............[(1)]
षु प्रतिभटेषूद्भटभ्रुकुटिभीषणललाटपट्टदुःप्रेक्षणी ❀..............हराट्टहासमि[(2)]-
व त्रिभुवनं कुर्वाणो गीर्वाणसुन्दरीमुक्तसुरकुसुम सं ❀..............लः सहेलम[(3)]-
सकृदपि सकृदिवाकृष्टस्य कोदण्डमण्डलस्य मध्य ❀........ .......... सतताविष्कृ[(4)]-
तसुदर्शनोऽपि दुर्दर्शनः, परेषामरविन्दविष्टर ❀..............[(5)]
भिरपि विलासिनीभिर्नयननीलोत्पलदलैर्म[७] ❀ ........ ...... .......[(6)][F. 12. B]
शङ्कुकीलनाकल्पकोन्माथ[८]व्यथिताभिरुत्तुङ्गस्तन[९]भराभोगभित्तिषु समुन्मिषद् घनसारसान्द्रेण
चन्दनरसेनालिख्यालिख्य – 'निर्दय[(1)] स्त्रीवधपातकादपि न बिभेषि' – इत्याद्यनेकविधमनु-
गृहमङ्गनाभिरहरहः[१०] समुपालभ्यमानः, मानिनीमानद्रुमोन्मूलनमकरध्वजैकविजय[(2)]-
कुञ्जरः, शौरिरिव मदनजनकः, कनककान्तिच्छुरितमरकतप्रभाभिरामदेहः[११], प्रतिदिवस-
मनवरतमवनमतां नरपतीनां मुकुट[(3)]तटकोटिविटङ्कवेदिकोल्लासिभिर्मरकतमणिमयूख[१२]-
जालकैरेतदीय[१३]करकमलानां मुकुलतामापादयत्सु[१४] निजचरणनखच[(4)]न्द्रेषु सम्पादितहरि[१५]-
णच्छायः सच्छायतः समदगजघटनापाटनपाटलितासिपल्लवभृतो भुजद्रुमात् प्रतिदिवस-
मुल्लसत्सुरभियशः[(5)]कुसुमसञ्चयः समरनिहतावनिपतिविलासिनीनां बाष्पाम्बुकलुषिते-
ष्वलकावरुद्धेषु कपोलस्थले[(6)] [F. 13. A] ष्वतिव्यक्तीकृताशिवक्रमः, क्रमवतामग्रेसरः,
अग्रगण्यः संग्रामविजयिनाम्, त्रिभुवनाभिरामो राम इव पृथुबलप्रलम्बारातिविदलन[(1)]-
स्तिमितक्षीरोदवीचीनिचयधवलधामभिर्यशःपूरपटलैर्धवलितत्रिभुवनैकभावनः, प्रसवभूमि-
रत्यद्भुतानाम्[१६], उन्मदकरिकुम्भकूट[(2)]कुट्टाकविकटकरवालनखरो नृसिंहः, चपलराजलक्ष्मी-
करेणुकालान[१७]पृथुभुजस्तम्भः त्रिदशराज इव अहितापकारी, भार्ग्ग[ व ] इव नि[(3)]र्मूलिता-
खिलक्षुद्रक्षत्रियः प्रकटितधनुर्वेदविद्यारहस्यश्च, भृगुरिवासिधेनुविद्यालतानामेकभवनम्,
भुवनभारोद्धारक्षमः क्षमा[(4)]भृतां भर्ता **म हा रा जा धि रा ज प र मे श्व र श्री भो ज दे वो ना म।**

यश्च[१८] प्रभवो[१९] धर्मस्य, आश्रयः सत्यस्य, कुलगृहं कलानाम्[२०], क्षेत्रं[(5)] क्षत्राचारस्य,
प्रमदोद्यानं विद्यालतानाम्, निधानं नीतेः, जीवितं शौर्यस्य, वसतिर्विलासानाम्[२१],आकरः
करुणायाः, बान्धवो वैदग्ध्यस्य[२२][(6)] [F. 13. B][२३].............. ❀ रसस्य, धौरेयो
धनुर्धराणाम्, अग्रणी गुणवताम्। यस्य वि[(1)].......... ❀ यु कुम्भिकुम्भस्थलोच्छलित-

१ °रामाया भूमे°। २ °शित°। ३ °र्तिनिषाने°। ४ विनष्टान्यत्र ६ अक्षराणि। ५ विनष्टान्यत्र ४ अक्षराणि। ६ निमग्न। ७ °हनैर्मै°। ८ °ल्पकान्माथ°। ९ °स्तव°। १० °भिरनुरहः। ११ °देवः। १२ °मणिर्मयूख। १३ °रेनदीय°। १४ °मापदयत्सु। १५ °हरण°। १६ °मिरित्य°। १७ °कालनृपृथु°। १८ यस्य। १९ प्रभावो। २० कालानाम्। २१ वसतिविला°। २२ वैदग्ध्यस्य। २३ चतुर्दशाङ्काङ्कितस्य पत्रस्योत्तरार्द्ध एव प्राप्तः। तस्मिन्निम्नावतारिताः पंक्तयः परिपठ्यन्ते।

मुक्ताफलमालाच्छलेन प्रति[1] ..............❀ रामापरपुरुषानिसर्गानुरागिणी नियतमेकपत्नी[2] ..............❀ कृशिमानमानीयन्त प्रतिपक्षलक्ष्मीविजृम्भितानि । यस्य[4] ...........❀ वदनमुन्निद्रकुवलयदलदामदीर्घोऽकृत्रिमक्षाम[1] (?) वक्षस्थ[5] ...........❀कृतिमतिरूपवयोनिर्जितमकरध्वज[6] [F. 14 A]........❀ तिजरद्भवीसुरभिरभू❀.............................[7] क्षणेरधस्तनो ब्रह्माण्डभाग इव कालानलस्य, जलदमिव[3] ❀..............[8] मोकः प्रतापहुतवहस्य । यश्च प्रवितरन् प्रजागरनुन्मूल ❀............[9]कम्पयन् वपुर्नक्तंदिनमधिवसति हृदयानि वनजदसकल्पि (?) ❀...........[4] तेरत्यर्थोन्नतिभृतः समुन्नतवंशाद्विबुधजनैसेव्यमान ❀..............[5]द्रावधि भगवती सरस्वती । यश्च रोहणाचल इव मणिग ❀...........[7][F. 14. B]....न, क्षीरोद इव वीचिनिचयेन, गगनाभोग इव तारकनिकरेण, त्रिदशतरुरिव कुसुमनि[व[11]]हेन, फणिपतिरिव फणाचक्रवालेन[6], अम्बुजाकर इव मृणालवलयेन, निखिलभुवनस्पृहणीयेनाहि[म]धवलेन सङ्ख्यातिगे[7] नामोदिना मेदिनी[8] ....[रक्ष ?]णक्षमेण, ह्लादिना गुणकलापेनालङ्कृतः । यस्य[9] चातिप्रज्ञाप्रकर्षमालोचयतां विपश्चितां गिरिर्न[10] (रि न?) गरिमाणमारोहति गुरुः[11], न प्रति[12] ....[13][भामते प्रतिभा?]वान् भार्गवो, नोद्धवमति[13] वर्द्धयत्युद्धवः[14], अयते[15](?) न प्राज्ञगणनां चाणक्यः, न कुशाग्रीयबुद्धितामधिश्रयति धर्मकीर्तिः । यस्य च कृपा[1]णं

उज्ज्वलवैडूर्यसोदरच्छायसलिलमुल्लसद्विपुलपुष्कराभिरामयोमसमुद्भवत्कुमुदमधिकविकसत्कुवलयश्रीकमलकमलिनीदल[1] श्यामलमगाधम्, सर इव परद्विपघटाभिरपि दुरवगाहम्, सततमाश्रयति[16] शतशः सङ्ग्रामसीम्नि[17] विजयलक्ष्मीः । यस्य चानुपमस्वैभवानि[6][F. 15. A] र्म्मिते शोणमणिमरीचिसञ्चयोद्भासिनि भास्वताप्य[18]नतिक्रमणीये रमणीयतायावम (?) इयलाघवमुल्लङ्घनीये परैरेकपुर इव पृथिव्याः[19] प्राकारतां कलयति प्रतापे, परिखाश्रियमाश्रयन्त्यगाधाः परितश्चत्वारोऽपि रत्नाकराः । यस्य चन्द्रातपायितमप्रविष्टेन्दुकिरणविस[2] ......[19]लोदरेषु, मलयजरसच्छटायितं[20] विरहिणीतनुलतासु, डिण्डीरपिण्डायितमम्बुराशिलहरीषु, सितदुकूलायितमासाव[3] ......[21]सरित्पूरायितमाकाशवर्त्मनि, पुण्डरीकखण्डायितमखिलसलिलाशयेषु, स्फटिकोपलायितमचलमेखलासु, सितविता[4][22] [नायि]तं ब्रह्माण्डमण्डपाभ्यन्तरे, विततसितपटायितं प्रवहणव्रातेषु, समुन्मार्जितद्रविडीदन्तकान्तिसोदरैरुन्निद्रकुन्दच्छदच्छायाबन्धुभि[1] ....[23]र्निबन्धप्रसरैर्यशोभिः । यश्च गिरिराज इव त्रिदशसरितः, शशधर इव ज्योत्स्नायाः, हराट्टहास इव[6] [F. 15. B] विशदकान्तिसम्पदः,

१ परमापुरुष° । २ °दीर्घोक्कमक्षाम° । ३ °जलदमिव° । ४ °जननसेव्य° । ५ विनष्टान्यत्र त्रिण्यक्षराणि । ६ °वलेन । ७ संख्यातियेन । ८ विनष्टान्यत्र द्वित्राण्यक्षराणि । ९ ये । १० निरिर्नगरि° । ११ गुरु । १२ विनष्टान्यत्र चतुःपञ्चाक्षराणि । १३ नोद्धवमजि° । १४ °त्युद्धधः । १५ अयवि° १६ °माश्रयविशतपी । १७ °सम्नि । १८ °ताव्यनति° । १९ विनष्टान्यत्र पञ्चाक्षराणि । २० °छटापितं । २१ विनष्टान्यत्र चतुःपञ्चाक्षराणि । २२ विनष्टान्यत्र चत्वार्यक्षराणि । २३ विनष्टान्यत्र त्रीण्यक्षराणि ।

क्षीरोद इवामृतकरकलायां[1] ❀.................[(1)]अवदातरोचिषः[2] कीर्तेर[3]-भूत् प्रसवभूभिः। यस्य च चरण ❀.................[(2)]दर्चनपतिमुकुटकोटिपत्रसङ्गेषु गारुन्मतर ❀.................[(3)]दयन्ति चामरग्राहिणो विलासिनीजनस्य। ❀...
...............[(4)]..........दजलास❀.................
[(5)] [ F. 16. A ] ताश्चर्यमजनयदमीषां राजलक्ष्मीः। यस्य च ❀...............[(1)]रादै-रावतगण्डकण्डूयनोन्मथितो हरिचन्दन ❀.................[(2)]श्वखुरोत्खन्य-मानस्फटिकशिलासङ्क्रान्तोद्यद ❀.................[(3)]रायसञ्चलितप्रस्थसन्धि-बन्धाद्रजनिचरबलावलोक ❀.................[(4)]वेलासलिलसीकरासारैरनव-रतसंसिच्यमान ❀.................[(5)] [ F. 16. B ] ❀.................
.........[4]भिः समन्ततः सेव्यमानचन्दनलताभवनातप[(1)]❀.................
तोपलक्षमाणकनकशिखरग्राव्णः स्मरशरनिकर[(2)]❀................. राद्भूतः समुत्पादैरंशुभिः स्पन्दमानचन्द्रमणिशि[6][(3)]❀................. दिवसकरकिरणजाल-च्छुरितदलतया सततमिव पल्ल[(4)]❀................. गमापीयमानोत्तुङ्गशिखरनि-राम्भसः रभसावतीकदि[(5)]❀................. ती चः (?) शीलोच्चैयात्[7]क्रीडाधन-विहरणोद्यतमृडानीचरणमुद्रा[(6)] [ F. 17. A ] ❀................. रायमाणध्वन-द्गम्भीरजलदपटलामन्दमारुतान्दोलनप्रचल[(1)]❀................. खिन्नकिन्नरीगीय-मानत्रिपुरविजयावदातमुखरितनिकु[(2)]❀ ................. भरितकुञ्जोदगल्लीलावन-विहारप्रवृत्तवित्तेश्वरविला[(3)]❀................. स्फटिककटकादावस्फुटिकाचलाद्विविध-मणिकान्ति[(4)]❀................. स्वैरमाज्ञा विचरति। यं च सच्चक्रनन्दकं कुवलयाभि[(5)]
❀................. कृतबलिराजं पुरुषोत्तमं सततमासेव[(6)] [ F. 17. B ] ते श्रीः[?]
—इत्यभिधाय विरतवचसि यन्त्रपुत्रके स महीपतिः स्वयं कथयितुमारभत[8]।

## [ कथानायिकावर्णनम् ]

अस्ति च तस्य राज्ञः सकलजनमनोहारिरूपसम्पदधिदे[(1)]वतेवायतनमेकं मकर-केतो[ः], सौन्दर्यनिर्जितत्रिदशसुन्दरीसौन्दर्यसम्पत्तिः, सततमुल्लसतो वदनचन्द्रमसः परि-स्फुरत्[9] कान्तिजा[(2)]लेन प्रतिहतप्रसरमग्रतस्तिमिरनिकरमिव पश्चान्निभृतनिलीनं केशपाश-मुद्वहन्ती, अष्टमीचन्द्रशकलानुकारिणा ललाटफलकेन मल[(3)]यजरसनिर्म्मितमतनुवृत्तिं विशेष[10]कमायतनासावंशदण्डमाननश्रियस्त्रिभुवनविजयिना रामणीयकेनार्जितं[11] सितातपत्र-मिव च द[(4)]धाना, स्निग्धाञ्जनश्यामले तरुणजनलोचनालिभिरनवरतमुपास्यमानकटाक्ष-

---

१ अत्र षोडश ( १६ ) अंकांकितस्य पत्रस्योत्तरार्द्धस्य त्रुटितत्वादिमान्येव वाक्यानि परिपठ्यन्ते।
२ सोचिषः। ३ शकीर्तिर°। ४ अत्र सप्तदश ( १७ ) अंकांकितस्य पत्रस्योत्तरभाग एव प्राप्तः। ५ तस्मिन्निमान्येव वाक्यानि परिपठ्यन्ते ६ स्पंदसान°। ७ शीलोचया°। ८ कथितुमरभत। ९ °स्फुरत्य। १० विशेपणं। ११ °केत्तर्जितं।

कुसुमस्तबके जनितगुरुमदनफलतयेव किञ्चिदा न[1]तप्रान्ते भ्रूलते बिभ्राणा, अन्तःसञ्चरत्[2] तरलमधुकरेण विकसितसरोजयु गलेनेव[3] [F. 18. A] नयनयुगलेन विराजमाना, कलङ्कमपाकर्तुं[4] द्विधाकृतेन शशिमण्डलेनेव कपोलफ[5]लकद्वयेन द्योतमाना, शिरीषकुसुम-सुकुमारेण तरुणजनहरिणग्रहणनिपुणेन मदनव्याधवागुरापाशेनेव श्रवणपाशद्वन्द्वे[6]न रोचमाना, ईषदुन्नताग्रेण मकरध्वजवीणाकोणानुकारिणा नासावंशेन भ्राजमाना, रतिवल्लिपल्लवेन रागसागरप्रवालग्रन्थिना प[8]क्वबिम्बी[7]फलपाटलेन दशनच्छदेनोद्भा-समाना, रेखात्रयविराजिना कम्बुनेव कलस्वनेन, मदनद्रुमकन्दलेनेव कोमलेन कण्ठ-कन्दलेन,[4] कमनीयतामाकलयन्ती, क्रमापचीयमानवृत्ततया स्निग्धमांसलतया चाति-मनोरमे मृणालभ्रान्त्या स्फुरितमसृणनखमयूखमञ्जरीके[5]शरश्रेणिभ्यां विकचरक्तोत्पला-भ्यामिव हस्ताभ्यामाश्रिते कोमलतया समुपहसितबिसलते बाहुलते दधाना, ईषन्निमग्नचू-चुकेनो[7][ F. 18. B ]त्तुङ्गेन सुवृत्त पृथुलेन रतिसुखनिधानकलशयुगलेनेव स्तनयुगलेन शोभमाना, मीमांसाकुविचारेणेवातिदुरूहेणात्युत्तुङ्गस्तनभरान्तरिततया सकलजन[1]स्पृह-णीयं दृष्टिविषयमप्राप्नुवतेव कृशतामागतेन कृशेनापि स्वीकृतवलिना तनुनाप्युत्तुङ्ग-पयोधरभरधारणक्षमेण मध्यगतेनाप्युप[2]रि तिष्ठता सर्वरमणीयानां मध्यभागेनालङ्कृता, मकरध्वजगन्धसिन्धुरस्य क्रीडामज्जनह्रदेनेव गम्भीरेण नाभिमण्डलेन भूषितमध्यभागा, स्तनकुम्भ[3]शालिनो यौवनमतङ्गजस्य विगलितया मदलेखयेव स्मरधनुर्लताजीवयेव परस्परौपम्यदानार्थमिव रोमराज्या विभक्ततनुमध्या[4], रतिक्रीडापर्वतरत्नशिलामिव विशालां मदनकरिणो विहरणस्थलीमिव नितम्बस्थलीं कलयन्ती, विपरीतोपहितकनक-कदली[5]काण्डानुकारिणा दुर्दमदनद्विपालानस्तम्भद्वयसोदरेणोरुयुगलेन प्राप्तपरभागा, वृत्तानुपूर्वा[6]भ्यामनतिसरलाभ्यां कोमलतया विजितकदलीकाण्डलाव[7][ F. 19. A ] ण्याभ्यां जङ्घाभ्यामुद्भास[1]माना, वदनेन्दुकान्तिनिर्जितसरोजाकरैरुपायनीकृताभ्यां सरो-रुहाभ्यामिव चरणाभ्यामधिकजनितशोभा, सुवृत्तया[2]त्यर्थमुज्ज्वलया समस्तावयवालोक-नार्थं कन्दर्प्पस्य दर्प्पणमालयेव[3]नखश्रेण्यालङ्कृतचरणयुगला, सर्वाङ्गानि परिपूर्य कान्तिच्छ-लाद्बहिः[4]प्रसृतेन लावण्येन सेवकजनेनेव परितः सदैव परिवारिता, आयतस्य मन्मथर-थस्येव वदनचन्द्रमसो रथचरणयुगलमिव मरकत[5]मणिकुण्डलद्वितयं धारयन्ती, कपोल-स्थलीजन्मनः पत्रलतायाः प्रचुरलावण्यसलिलसेकैर्मदनज्वरदवथुव्यथाकदर्थितानां कामि-जनदृ[6]शां विश्रमार्थमिव च्छायामनुदिवसमभिवर्द्धयन्ती, मदननरपतेः साम्राज्याभिषेकाय स्तनकलशपातिनीमत्यच्छवि[श]दां सुधासलिलधारा[7]मिव स्वसौभाग्ययशःपताकामिव रतिनिधानस्तनकलशरक्षिणो मदनभुजगस्य निर्मोकपङ्क्तिकामिव हारलतामुरसि कलयन्ती, मकरल[8][ F. 19. B ]

*[ अत्रादर्शे २० अङ्काङ्कितं पत्रं विनष्टम् ]*

---

१ किञ्चिदोनत° । २ °प्राते । ३ °सचरत् । ४ °जुगले° । ५ °मेयाकर्तुं । ६ मरकत° । ७ °बिम्बो° । ८ सुवृत° । ९ °जवस्पृह° । १० वृत्तानुमर्याभ्या° । ११ °मुद्भाममाना° । १२ °मालव्येव ।

...यति। रतिमपि परिभवत्यनिन्दितैः संसृज्यते। मधुरमपि उदात्तं च भाषते। प्रहास्येऽपि स्मेर[1]मुखेव भवति। अश्लीलं परिहरत्यनतिनर्म्म(1)शिला। अरक्तापि रञ्जयति [रक्तं?]। असक्तापि सञ्जयति सक्ते। स्वीयरूपातिरेकापहस्तितरूपसम्पदात्मानमवमन्यमाना भगवती श्रीरपि कम(2)लवनवासमङ्गीचकार। या च विकसितवदनारविन्दसुन्दरीनयननीलोत्पलाभिरामा, मृदुभुजलताभिमृणालोपशोभिनी,(3) निविडोत्तुङ्गस्तनचक्रवाकमिथुना गम्भीरनाभिरन्ध्रावर्तशालिनी, विलसत्त्रिवलीतरङ्गा, मदनकरिणो विहरणार्थं मयारेव (?) लाव(4)ण्यसरसी, शृङ्गाररसनिर्भरा[2] निर्म्मिता भगवता प्रजापतिना। या च हरविग्रहे विफलतामात्मनोऽस्त्राणामालोक्य त्रिभुवनविज(5)यार्थमपरमिव जैत्रमस्त्रमुत्पादितं भगवता मकरकेतुना।

सा च अपरुषा वेषे, अव्यपदेश्या देशभाषासु, अग्राम्या गोष्ठीषु, प्रकृष्टो-(6)[F. 21. A] भयचतुःषष्टिज्ञाने, विचक्षणा कामसूत्रादिविचारेषु, प्रगल्भा प्रश्नोत्तरप्रहेलिकादिप्रभेदेषु, कौतुकिनी वाकोवाक्ये, लब्धलक्ष्या ला(1)स्ये, असमा समस्यासु, प्रबुद्धा प्रबन्धनिबन्धनेषु, भव्या काव्यकरणे, प्रथमा गाथाग्रथने, कुतूहलिनी क्रीडासु, अलोलुपा पाने, परा(2)ङ्मुखी व्यसनासङ्गेषु, अन्तर्मुखी काव्यार्थभावनासु, अवक्रा वक्रोक्तिषु[3], अनवगीता गीते, मुख्या मुरजवाद्येषु, अतुच्छा त्यागे, अविकत्थना लोभे,(3) सप्रपञ्चा विपञ्चीनाद्येषु।

यस्याश्चरणकमलाभ्यां सकाशादिव गतिविलसितानि राजहंसैः, ऊरुयुगादिव क्रमापचयमसृणताम्(4)दुस्पर्शतादयो रम्भास्तम्भैः, नितम्बबिम्बादिव पृथुलताधिवासः क्षितिधरस्थलीभिः, नाभिमण्डलादिव गम्भीरता ह्रदैः, वलित्रयसनाथान्मध्य(5)प्रदेशादिव तरङ्गाभिरामता निम्नगाभिः, रोमराज्याः कमनीयता स्मरधनुर्गुणेन, स्तनयुगलादिवातिनिबिडासङ्गतिश्चक्रवाकमिथुनैः,(6) [F. 21. B] बाहुलताभ्यां सुकुमारता मृणालीभिः, करकमलाभ्यां रामणीयकमशोकपल्लवैः, कण्ठकन्दलाद् राजित्रयसन्निवेशाभिरामता कम्बुभिः, अध(1)रपल्लवाद् निसर्गशोणिमोत्कर्षो विद्रुमग्रन्थिभिः, कपोलफलकाद् अमलकान्तिः कनककेतकीदलैः, नयनयुगलात् तरलता मृगीलोचनैः, ध(2)वलता पुण्डरीकखण्डैः, तीक्ष्णता केतकच्छदैः, सरलता सज्जनैः, कालिमा मधुकरीभिः, भ्रूलतायुगलात् कुटिलिमा चन्द्रलेखया, श्रवणाभ्यां सं(3)स्थानचारुता स्मरधनुर्ज्यापाशद्वयेन, नासिकावंशाद् आकृतिं (ति?) कमनीयता मोग्धायाः (?) [उ]द्बुद्धपाटलाप्रसूनैः, ललाटफलकादाकाररामणीय(4)कमा[4]रूढगुणेन स्मरधनुषा, केशपाशाद् जनमनोमोहकत्वं ब[5]र्हिकलापैः, वदनमण्डलादखण्डितकान्तिता जननयनहारित्वं च रा(5)[F. 22. A]काशशाङ्केन, वचसो माधुर्यं पिकवधूभिः, सर्वाङ्गेभ्यो लवणिमा रुमाकरैरगृह्यन्त[6]।

---

१ स्मेरमुखेव। २ निर्भरा। ३ वाचोक्तिषु। ४ °कमरूढ°। ५ चहिर्किलापैः। ६ °रगृह्यन्ते।

यस्याश्च रूपनिष्पादनार्थमिदमुपकरणकदम्बक[1]मनाददानेनापरमिवोपकरणजातं[1] किमप्यासादितं भगवता प्रजापतिना। तथा हि – न गृहीतश्चमरीवालभारो, न बर्हिणां बर्हकला[?]पाः, न मधुकरकुलानि, न शशधरार्धम्, न कनकपट्टशकलानि, नानङ्गसारंटनि-(?)द्वयम्, न विकचेन्दीवराणि, न मधुकराक्रान्तैकदेशानि केत[3]कीदलानि, न मृगीलोचनविलासाः, न पाटलाप्रसूनानि, न मद(?)वीणाकोणरामणीयकम्, न बिम्बीफलानि, न बन्धुजीवकुसुमानि, न वि[4]द्रुमग्रन्थयः, न परिपक्वदाडिमीबीजत्विषः, न कोकिलाध्वनयः, न वीणानिक्वणाः, न बन्धूककुसुमलावण्यम्, न विकचकनकचम्पकावदा[5][F. 22. B] तता, न स्मरधनुर्ज्यापाशयुगलम्, न कन्दलानि, न कम्बवः, न मृणाल्यः, न श्यामालताः, न पल्लवितानि(?), न रक्तोत्पलानि, न चक्रवाकमिथुना[1]नि, न करिकुम्भाः, न सरित्तरङ्गाः, न स्मरधनुर्ज्यालावण्यम्, न मदनरथचक्रनाभयः, न रत्नशिलातलानि, न कनकफलकानि, न रम्भास्त[2]म्भाः, न द्विरदेन्द्र[2]कराः, न कोकनदानि, न मुक्तामणयः, न शरत्तारकाः, न द्विरदेन्द्र[3][3]गतयः, न राजहंसप्रचलितानि। तथाप्याश्चर्यनिधानमद्भुतैकनिधिना विधिनेयमुत्पादिता। अहोऽत्यन्ताद्भुतरूपनिर्म्माणकौशलं[4] विधातुः।

या च लावण्यमय्यप्यक्षारा, साधारण्यप्यसाधारणी, स्फटिकमणिपुत्रिकेव सन्निहितोपाधिरागिणी, द्रौपदीव नकुल[5]प्रिया, प्रावृ[4]डिव दर्शिताचिर रुचिः, यामिनीव सकलजनाभिलषणीयस्वापा, निर्युद्धोद्यतकृष्णमूर्तिरिवानङ्गदा, नेपालभूमिरिव[6] [F.23. A] मृगमदामोदिनी, उद्यानमेदिनीव रुचिरकलकण्ठोपशोभिता, प्राग्ज्योतिषक्षितिरिव कृष्णागुरुपत्रभङ्गभूषणा, कदाचि[द्] भुजगीव बहु[1]प्रजाग[7]रक्षीवनयना। या च त्रिदशसेनेव कुटिलकेशपाशोपशोभिता, कैलासमेखलेव निरुद्यमा[8][ना]लकाभिरामा, प्रियजन[2]कथेवाभिलषणीयनासिक्यप्रदेशा, वनलेखेव कमनीयतमालपनसारा, वसुधेव सरसशोणाधरोपशोभिता, नाटकाङ्कस्थि[3]तिरिव रम्भोद्भासिनी, हरिश्चन्द्रकथेव प्रथितचारुलोचना, किष्किन्धगुहेव सुग्रीवोद्भासिता, रामायणकथेव प्रख्यातसुबाहुप्रह[4]स्ता, प्रावृडिव घनस्तननाभिरम्या, छन्दस्थितिरिवोज्ज्वलतनुमध्या, प्रजावनिरिव सदा समजघना; क्रौञ्चगिरिरन्ध्रपद्धतिरिव परि[5]चितराजहंसगतिः, कुरुपाण्डवद्यूतवेलेव प्रवृत्तोरुद्वन्द्वा[9] शृङ्गारमञ्जरीगद्यप्रवृत्तिरिव[10] सुललितपदा। या सर्वतः प्रसृतस्य स्व[6] [F. 23. B] देहप्रभापटलस्यान्तःस्थिततया मन्दरगिरिमथ्यमानजलमध्यवर्तिनीं श्रियमिवोपहसति, सर्वाङ्गसौन्दर्यावलोकनस्तिमितपक्ष्मपुटतया[1] निर्निमेषमवलोकयतो मर्त्यानमर्त्यानिव विदधाति, नयन अतिसंयोगाविषममवलोकयन्ती भोगिनामप्यद्वितीयां विषमविषमूर्च्छा-[2]

---

१ °जाते। २ °देन्दुकराः। ३ °देन्दुगतयः। ४ प्राविडिव। ५ °चिररविः। ६ °कठो°। ७ प्रजागार°। ८ निनुद्यमा°। ९ °द्वन्द्वो। १० °रिवसुकलित°।

मापादयति। अस्थिरेणाद्वारेणा(?)तिसरलेनापि लोचनयुगलेन कदाचिद्प्यनासादित-भङ्गान्यपि कमलकाननानि पराजयते।

य[3]स्याः कोऽप्यपूर्वो मुखेन्दुर्यस्य सर्वदा परिपूर्णाकृतेर्दिवाऽप्युल्लसितमहसः कलङ्को[1]ज्झितस्य पङ्कजमैत्री, कुमुदा[2]करेषु द्वेषः, नि[4]खिलरागकारिणी कान्तिः। या च केशपाशमन्तःसन्दानितविविधकुसुमनिकरमिषुधिमिव कुसुमसायकस्य सकलकामिजन-हृदयसे[5]दनार्थमिव दधाति। यस्याश्च निसर्गसुरभिणि लोहिताधरदलाभिरामे दशन-कान्तिकेसरप्रकरोद्भासिनि वदनारविन्दे निपतिता[7] [F.24. A] सौन्दर्यरसमापिबन्त्य[3]ः क्षीबा इवातिनिश्चलपक्ष्मपक्षपालयः पदमपि न चलन्ति यूनां[4] नयनमधुपालयः। या कामिजनहृदयवर्त्तिनः प्रज्व[1]ल[5]न्मदनदहनस्य प्रशमनार्थं पृथुलमत्युन्नतं लावण्यरसनिर्भरं कुचकलशयुगलमुद्वहति। मन्ये च यस्या रूपनिर्म्माणाभ्यासमिव क[2]र्तुं प्रजापतिना लक्ष्मीरत्यप्सरःप्रभृतयो युवतयः पूर्वमेव निर्म्मिताः। कथमन्यथा सविशेषकौशल-निष्पादनीया निखिलत्रैलोक्य[6]स्त्रैणरामणीयकविजयिनी रूपसम्पत्तिस्तस्याः। के नानुरक्ताः, के वा ये न वञ्चिताः, के वा न विप्रलब्धाः, कैर्वा सर्वस्वमस्या न दत्तम्, के वा न ब्राह्मणा[1] राजानो राजपुत्रा वणिजः कायस्थाः कुटुम्बिनो वा दासतामाश्रिताः। यस्तया सङ्गतः स एवं जानात्यहमेवास्याः प्रियः, म[7]य्येवे[6]यमनुरागिणीति। लभते च सा कदाचित् करिघटाः, कदाचित् तुरङ्गमसन्दुराः, कदाचित् काञ्चननिचयाः, कदाचिदपरि-मितमहार्हाणि रत्नानि वा[6] [F. 24 B.] सांसि च। एवमस्याः प्रतिदिवसमुपचीयमानो विभवः परां कोटिमारुरोह। तथाप्येषा न वेश्यावृत्तमतिक्रामति। काञ्चनशतपञ्चकेन च बन्धकमादत्ते। त[1]थाप्यनुपमसौभाग्यवैभवान्न कदाचिद्प्येकाकिनी स्वपिति।

## [ शृङ्गारमञ्जर्या मातुर्वर्णनम् ]

तस्याश्च नृपतिपरिवारवारविलासिनीजनस्य निखिलस्यापि माननीयायाः,[2]जरा-प्रसरजर्जरितमूर्तिः, काशकुशकुसुमसंकाशकेशा, द्वित्रदिनविकसितशतपत्रजर्जरस्फारस्फारित-पुरातनकान्त्यागन्तु[क]विटग्रासगृध्नुतयेव प्र[8]तिदिनं विवर्धमानमाननं दधाना, तनुतरव-लीकलितमापाण्डुगौरं विवर्णश्रीपर्णी[10]फलकसो[11]दरं ललाटपटमुद्वहन्ती, सरथवधौद्ध्यत (?) [1]जरन्महिषविषाणशकलप्रतिमं भ्रूयुगलं धारयन्ती, वय[ः]परिणतिवशादीषन्नि[12]मग्नं रागान्धजननिपातान्धकूपयुगलमिव लोचनद्वयं बिभ्रा[5]णा, अलाबुबुध्नोपमातिस्थूल-पृथुलायतचिपटनासापुटा, उद्वृत्तमाक्षिकापर्णानुकारमोष्ठयुगलं बिभ्रती, अतिप्रलम्बतया सकलभुजङ्गबन्धन[6] [F. 25. A]पाशाविव श्रवणपाशौ कलयन्ती, वयःपरिणतिश्लथ-

१ कलंकोञ्झितस्य।—२ कुमुदा°। ३ पिबन्त्यः। ४ यूना। ५ प्रज्वले°। ६ जानात्यस्त्वये-वास्याः। ७ मयोवे°। ८ कदाचिन्नाप्येकाकिनी। ९ विस्ताणर्ण°। १० श्रीपल्ली। ११ °सौदरं। १२ °दीषनिमग्नं।

तया स्वभावपृथुलयोरपि कपोलयोरतिपृथुलतामिवापादयन्ती, विगलितदशनतया[1] मुहुर्मुहुर्जग[1]द्ग्रासगृद्धुमिव प्रलम्बमोष्ठं संवृण्वती, विषमविषधराशीप्रायोपलक्ष्य[2]माणद्वित्र-दशना, किंचिन्निमग्नमतिपृथुलस्थूलतरुणवनमहिषकन्धरानुकारं[2] कण्ठं दधाना, अति-पृथुलस्थूलकण्डरासन्तानसन्दानितकन्धरावन्धतया परार्थागमप्रवेशवर्तनीरिव सर्वतः समु-च्छ्वास[3]माना, क्षुत्पीडाऽवसीदज्जरदजगरदेहसकलप्रतिमबाहुकाण्डा कू[3]र्परादधस्तात् सर्वतः समुपलक्ष्यमाणशिराजालकतया तीव्रतपनतापो[4]त्क्वथितात्यायतस्थपुटचिपिटकोशातकी-फलप्रायभुजयुगा, अनवरतदृढप्रहारसञ्जातकठिनकिणग्रन्थिता[व]यवान्तरापि कठिन-तरहृद[5]या, अतिपृथुलकाष्ठपात्रीप्रतिमतुण्डोत्तानितस्थूलश्लथारघट्टघटीप्रतिमपयोधरा, अतिवलात् पृष्ठपार्श्वयोः प[6] [F. 25. B] तितान् सन्धीन् स्वचरित्रगोपनस्थानानीव दधती, अतिस्थूल[4]तुण्डान्तरिततया दुर्विभाव्यमतिसम्भोगभयात् पलायितमिव नितम्ब-बिम्बं दर्शयन्ती, विवर्द्ध[1]मानपृथुलस्फिक्तया प्रतिदिवसमापिबन्तीव व्योम्नोऽवकाशम् । तैलिकयन्त्रयष्टिप्रतिमेनोरुयुगलेन, दीर्घपक्वत्रपुसीफलानुकारिणा[2] जङ्घाद्वितयेन स्थूलदर्दुर-स्थवीयसा चर[ण]द्वन्द्वेन च विराजमाना । विनतोर्ध्वकाय[5]तयो परिस्थौष्ठपुटविदीर्णसृ[6]क्क-तया च त्रिभुवनमिव[3] ग्रसितुमाकाङ्क्षन्ती, आविर्भूततनुजरापरिचयाच्चिरोपचितभुजल-तामांसश्लथतया जरादोलनदोलामिव प्रकटयन्ती, मदनद्यूतकटित्र[4]मिव खटिका-रेखासपत्नीभिरनेककितवोत्पादिताभिर्जीर्णपाण्डुभिर्नखरेखाराजिभिरलङ्कृतसर्वावयवतया स्वचरित्रचित्रमिव प्र[5]काशयन्ती, अतिचलबहलमांसतया च निजमस्थिरत्वं सकलेष्वप्य-वयवेषु प्रतिपादयन्ती, बलिष्ठतया स्थपुटितेषु केषुचिदङ्गेषु[6] [F 26. A] वार्ध[7]क्येऽपि बाल्य-मिवाश्रयन्ती, अधोनिहितदृष्टिः, शुकचञ्चुकुटिलनासिकाग्रा, राशिकर्तुमिव पातालगतानपि स्फुरन्मणिगणान् भु[1]जङ्गानाक्रष्टुमभिलषन्ती, जगद्वञ्चनचातुर्यमहार्थतयोदु(न्दु ?)र-कन्दरा, त्रिभुवनमपि तृणाय मन्यमाना, कलिकालवृत्तिरिव पतितद्विजा[2], शुनीव सुरत-पराङ्मुखी, खगराजचञ्चुरिव कवलिताशेषभुजङ्गा, उद्यानभूमिरिव मधुमत्तालिसङ्गता, याचकद्विजवृत्तिरिवाभिनन्दित[3]ग्रहणा, ग्रहपतिरिव बहुशो भुक्तमीनमेषा, ताम्रपर्णी[8]व शतमुक्ताफला, वैडालिकवृत्तिरिव दम्भप्रधाना, महापुरुषचित्तवृत्तिरिव परार्थ[4]बद्धकक्षा, वामनमूर्तिरिव निजविक्रमाक्रान्तत्रिभुवना, पञ्चरात्रस्थितिरिव मायावैभवोपपादितभोग-स्थितिः, सिकतासन्ततिरिव स्नेहो[5]ज्झिता, गङ्गेव क्रोडीकृताखिलवसुः, विश्वरूपमूर्ति-रिव दुर्लक्ष्यस्वरूपा, [9]व्याकरणप्रक्रियेवोपसर्गवशात् परस्मैपदोत्पादनकुशला[6] [F. 26. B] छात्रमण्डलीव रूपसिद्धिनिपुणा, य[10]तिजनचित्तवृत्तिरिव मोक्षैकतत्परा, लोकायतस्थितिरिव-नाशितपरलोका, चाणक्यनीतिरिव यो[1] येनोपायेन ग्राह्यस्तं तेन गृह्णन्ती[11] । कुशला कलाकलापे, चतुरा परचित्तज्ञाने, निपुणा पण्याङ्गनाव्यवहारे, प्रवीणा परवञ्चनायाम्[2],

---

१ °जंगद्वास° २ °लक्षमाण° । ३ कर्पूराद° । ४ °स्थल° । ५ °कायतयापरि° । ६ °सृक्षतया । ७ वार्धिकेपि । ८ ताम्रपल्लीव । ९ व्याकरणमिवप्रकृत्येवोप° । १० प्रतिजन । ११ गृह्णति ।

दक्षा दुर्दमभुजङ्गदमने, विदग्धा विप्रलम्भे, पेशला वैशिकालापे, प्रगल्भा सगर्भोक्तिषु, अक्षीणर्णबुद्धिर्विशीर्णप्रतिसन्धाने । सर्वस्वमपि[1] दर्शयति न च प्रयच्छति । कञ्चित् किञ्चित् प्रदाय बालपानीयेनेव कर्णपानीयमन्तर्गतमप्यर्थमाकर्षति । वैशिकरहस्य-पण्डिता न खण्डिता वि[4]टैः । धूर्तैः प्रतारणार्थमभ्यर्थिता न कदर्थिता । वञ्चयति न वञ्च्यते । स्तोभयति न स्तुभ्यते । कदर्थयति न क[2] [F. 27. A] दर्थ्यते । मोहयति न मुह्यते । मृगतृष्णिकेवाशावासं[2] प्रयच्छति न च पूरयति । वसतिरसत्यस्य, मन्दिरं दम्भस्य, आलयो मायायाः, धाम धूर्तता[1]याः, सरणं कुसृतीनाम्, स्थानं मिथ्या-विनयस्य, आश्रयः प्रश्रयस्य, एकप्रयोक्त्री कपटनाटकस्य, गतिरिव विधिविलसितानाम्, घटयि[2]त्री दुर्घटानाम्, विघटयित्री सुघटितानाम्, भवितव्यतेवाज्ञातादिमध्यान्ता, अविद्येवाविचारितरमणीया, किम्पाकफलाभ्यवहृति[3]रिव वि[3]रुद्धपरिणामा, प्रतिपादिता-र्जवाप्यहितनुरिव प्रचारकुटिला, संसारवृत्तिरिव परमार्थता[4]शून्या, निधानमधर्मस्य, आकरः कृतकचाटू[4]नाम्, जीवितं वञ्चकतायाः, सदनं साहसिकतायाः, प्रभवः पातकस्य, स्थानमस्थितेः, गृहं मसृणतायाः, निकेतनं कैतवस्य, सद्म च्छद्म[5] [F. 27. B] नः, यशः-प[6]ताका कलिकालस्य, सब्रह्मचारिणी विषलतायाः, सनाभिः सूनायाः, आली विडालि-कायाः, वयस्या वृकीवर्गस्य, पितृस्वसा[1] पिशाचीनाम्, सहोदरी सर्पयुवतेः, सृष्टि-निकृष्टतायाः, भयस्यापि भीतिः, मार्या अपि मारी, त्रासस्यापि त्रासहेतुः, भवनं लोभस्य, वडवामुखज्वाला कीलालसागरस्य । यस्याः सकाशादिव शिक्षितं दृष्टिवञ्चनं बिडाल्या, क्रमादानं व्याघ्रेण, क्षिप्रकारिता श्येनीभिः,[1] अर्थप्रियत्वमाखुयुवतिभिः, रन्ध्रान्वेषि[7]-त्वमहिवधूभिः । या च[8] चन्द्रलेखेव सदा कुटिला दोषाश्रया च । यस्याश्चोपदेशप्रभावादः प्राप्तरूप[4]सम्पत्तयोऽप्यसुभगा अपि दासमिव कामिजनमभिमतेषु व्यापारेषु व्यापारयन्ति वेशविलासिन्यः । या च शुकचञ्चुकोटिकुटिला म[1]तिशालिनमपि शालि[9]मिव निस्तु-षीकृत्य भक्षयति । अतिविदग्धमपि दम्भयति । स्थिरम[1] [F. 28. A] प्यस्थिरी-करोति[10] । प्राज्ञमप्यज्ञयति । पण्डितमपि खण्डयति । धूर्तमपि नर्तयति । पटुमप्यपटूकरोति । चतुरमपि वञ्चयति । विपश्चितमपि पश्चात्क[1]रोति । धृष्टमपि धर्षयति । दक्षमपि क्षपयति । नापितजनेनेवातिरिक्तमलकतूलमिव गृहीतसारं परिहरति । शुक्राङ्गिरसयोरपि मतिम[1]तिसन्धत्ते । श्रोत्रियजनं भक्ष्यमिवाकाङ्क्षति । पिशाचीव शुष्कपिशितैकप्रिया अस्थीन्यपि न मुञ्चति । मधुकरीव मधुपानलम्पटा । मधुरा[3] मुखे, कुटिला मनसि, प्रसन्ना दृशि, दारुणा चेष्टिते, सरला सम्भाषणे, तरला भुजङ्गान् प्रति प्रतिपन्नपालने । गुरुराकारे, लघुश्चेष्टिते[4], उच्चा प्रमाणे, नीचा स्वभावे, स्थूला वपुषि, सूक्ष्मा कार्यदर्शने ।

---

१ मोह्यते । २ °वासावासा° । ३ °भ्यवकृति° । ४ मार्थतशून्य । ५ °पातका । ६ स्थनायाः । ७ °न्वेष्टित्वम° । ८ चा° । ९ शालमिव । १० °भवति ।

नटीव सभाजनप्रतापनाय हृदयशून्यं रोदिति । कदाचिदनिमित्तं[1] हसति । क[5]दाचित् स्वसुतां तर्जयति । कदाचिदावर्जयति । कदाचिद् योधयति । कदाचिद् बोधयति । कदा-[6] [F. 28. B] चिद् गृहादपि निर्वासयति । कदाचिदपयान्तीं वारयति । निःसारं निःसार-यति । निःस्वं निर्जीवमिव परिहरति । मुक्त्यपेक्षिणी संसारमिव विदित[1] सारमवगणयति । लोहकारभस्त्रेवाध्मातमूर्तिः । अर्थाशयाऽनर्थकं स्वसुतां प्रति पूत्करोति । संस्थाने बकेन, विलुम्पने वृकेण, दंशि द्वीपिना,[2] उत्पादकत्वे शरभेण, वृथारटिते करभेण सदैवात्यक्ता । अव्यक्तान्तस्तत्त्वगोपनार्थमकर्तव्यकाण्डपटिकयेव पटिकया सदैव प्रावृतमूर्तिः । ज्ञा[3]त-परतत्त्वापि पापैकरुचिः । समुपचितमांसत्वात् कोमलत्वग[3]प्यतिकठिना, स्थूलाप्यतिलघुः, अतिस्निग्धापि परुषा, शान्तमूर्तिरपि कृतान्तच[4]रिता । दान्ता[4]पि दमयति । घृष्टापि घर्षयति । नष्टापि नाशयति । आवर्जितापि वर्जयति । स्वीकृतापि निःस्वीकरोति । पारद-मूर्तिरिव सुवर्णमादाय[5] पाण्डू[5]करोति । नरसिंहमूर्तिरिव हिरण्यकशिपुक्रुद्धा, योगिन्यपि वियोगैकदत्तहृदया[6], [F. 29. A] सौनिकवनितेव सततं परमांसविक्रयिणी, अतिस्थूलो-दरस्फिक्पिण्डोरुयुगलतया चलितु[1]मक्षमाप्यतिचला, अर्थमय्यप्यनर्थदायिनी, नर्मदापि तापनी[6], गम्भीरापि सम्भ्रमवती, जातरूपक्षयाप्यासादितरूपा । सततं परपिशित[2]भक्षण-परतामाकलय्य भीतेनेव परमांसेन संश्रिता, सुरतैरिव सुरापानैः प्रीणयितुमशक्या, परार्थैरिव मांसैः सदैवानवाप्त[3]तृप्तिः, विप्रपर्षदिव[7] सदैव भोज्यप्रिया । साङ्ख्यस्थिति-रिवापरमार्थोपपदा नि[त्य]पुरुषभोगा, शाक्यशासनोक्तविश्वस्थितिरिव[4]क्षणिका, कणाद-मतिरिव द्रव्यतत्त्वैकप्रधाना, अक्षपादविद्येव सदैव बहुमतेश्वरा, प्रभाकरप्रज्ञेव स्मृति-प्रमोपोत्पादननिपुणा[5], कुमारिलमतिरिवार्थवादप्रधाना । ऐन्द्रजालिकान् बालकानिवो-पहसति । मायाविनो मयादीनप्युन्मत्तानिव न बहुमन्यते । कुटिल[6] [F. 29. B] मति-कौटिल्यप्रभृतीन् बहूनिवापटून्[8] गणयति । उपनिषद्विद्यास्वशन[स्]प्रभृतीन् वार्द्धका-द्विकलानिवाकलयति । मूलदेवं मूलहारं व्याहरति[1] । शशिनं[9] शशमिव भक्ष्यार्थमन्विष्यति । सांव[त्स?]रिकान् वराकानिव कारुण्येन पश्यति । सोमादित्यं सोममिव धर्षणीयं गणयति । ग्रीष्मलक्ष्मीरि[2]व सकलजनतापकारिणी, शिशिरसम्पदिव सकलजनोत्कम्पहेतुः, पक्षिमा-लेव[10] दर्शितानेकविकारा, विश्वस्थितिरिव विचारविर[3]सा, जलधिमथनवेलेव पर्यन्तोत्था[11]-पितकालकूटा, पुराणस्थितिरिव कमपि कथाभिः, कमप्याख्यानकैः, कमपि कड[व]ककैः, कमपि मणि[4]कुल्याभिः[12], कमपि दृष्टान्तैः, कमपि निदर्शनैः[13] प्रतिबोधयन्ती, शाकु-निकस्थितिरिव पक्षिरुतज्ञानप्रधाना, वध्यशिला भुजङ्गानाम्, सूनास्था[5]नं विटपशूनाम्,

१ °चिदनमित्रं । २ पटिकये° । ३ कोमलत्वाग° । ४ दाता° । ५ पाण्डु । ६ नापनी । ७ विप्रकर्षदिव । ८ बहूनिवाबहूपटूत्वागणयति । ९ शशिं । १० °सालेव । ११ पर्यन्तोस्थापित° । १२ वाणिकुल्याभिः । १३ निर्देशनैः ।

वागुरा विङ्गमृगाणाम्, योग्यावनिः कपटनाटकस्य। मायेव नानाविधपाशपातितपशुः, जलूकेव सततमापीतशोणितोप[6] [F. 30. A] चिता, डिण्डिकपर्पदिव परग्रन्थिस्रावणजातनिवहा, वैद्यवृत्तिरिव प्रकामातुरोपजीविनी, धूर्तैरपि व्याप्यमाना, विटैरप्युपास्यमाना, [1]कुरूपयुक्तापि न कृपान्विता, मुनिजनसंवर्धिततरुपंक्तिरिव वटपानासप्रीतिः, विश्वम्भरेव वक्रोक्तिहतहृदया माता विषमशीला नाम[2]।

## [ शृङ्गारमञ्जरीं प्रति मातृदत्तशिक्षावर्णनम् ]

अथैकदा भुक्तोत्थितामसौ यामावशेषे वासरे मन्दीभावमासादयति भगवतो भास्वतः प्रभाविताने मणिवितानकस्याधस्तान्म[3]हार्हपर्यङ्कासीनामनतिदूरवर्तिनं पर्यङ्कमभिरूढा विषमशीला शृङ्गारमञ्जरीमित्यवोचत्—"वत्से! निजलावण्यसारूप्यसौभाग्यमदमत्ता[4]मा कृथाः क्वचिदपि प्रमादम्। प्रमादिन्यो हि वेशप्रमदाः प्रायो धूर्तविटैः कियन्त्यो नाम न वञ्चिताः, कियन्त्यो वा न विप्रलब्धाः, कियन्तीनां वा न सर्व[5]स्वमाच्छिन्नम्। तत् पुत्रि! सर्वथैवाप्रमादिनी भव निजचित्तरक्षणे वित्तरक्षणे च। सावधाना भव वैशिककलाकलापे परचित्तावर्जने च। यस्मादावर्जितचि[6] [F. 30. B]त्त एव रञ्जयितुं शक्यः। रञ्जितचित्तवृत्तिर्हि सर्वस्वं जीवितं च प्रयच्छति। न खल्वद्यापि च सौभाग्यगर्विता जानाति भवती कथमपि न ज्ञातचित्तवृत्तिरात्त[1]सर्वस्वो निर्वास्यते, कथं वा स एव भूयोऽपि वर्धितविभवः प्रतिसन्धीयते, कथं वा प्रथममावर्ज्यते, कथं वा सङ्गतो विघटमानः स्थिरीक्रियते, क[2]थं वा विरज्यन्नसमरागेण पुनरपि रज्यते, कथमन्यचित्तः पुनरनन्यचित्तः क्रियते। यतो हि प्रतिप्राणि दुर्विज्ञेयाश्चित्तवृत्तयः। रुद्रादिवार[3]णवदन्याकारादन्यमनस्काश्च बहुप्रकाराः पुरुषा भवन्ति। यदि कश्चिद्भीरुरपि शौर्यं प्रकटयति। लुब्धोऽप्युदात्तायते। उदात्तोऽपि कदर्य[4]वद् व्यवहरति। दुर्भगोऽपि सुभग इव चेष्टते। वणिगपि विटायते। विटोऽपि वणिज्यते। दरिद्रोऽपीश्वरायते। कश्चिद्धर्मरुचिः, कश्चिदर्थपरः[5], कश्चित् कामप्रधानः। तदेवं चित्तवृत्तीनां वैचित्र्ये सति प्रथममेव सम्यक्चित्तवृत्तिमाकलय्य यो यत्र चित्तवृत्तिस्तं तया क[6] [F. 31. A]मपि प्रोत्साह्य, कमप्यनुप्रविश्य, कमपि निराकृत्य, कमपि भीषयित्वा, कमपि रञ्जयित्वा, स्वयमरज्यन्त्या सर्वस्वमपहृत्य निर्वासनीयः। तत्र रागो[1]ऽपि तावत् प्रथममाकलनीयः। अनाकलितरागे हि प्रयुज्यमानं वैशिकरहस्यं विफलतामासादयति। आकलितरागे तु तदेव प्रयुज्यमानं सु[2]खेनैव फलाय भवति। स च रागो द्वादशधा। नीलीरागः। रीतिरागः। अक्षीवरागः। मञ्जिष्ठारागः। कषायरागः। सकलरागः। कुसुम्भरा[3]गः। लाक्षारागः। कर्दमरागः। हरिद्रारागः। रोचनारागः। काम्पिल्यरागः इति।

---

१ पिङ्ग। २ °वाश°। ३ जामा°। ४ °रामूसर्व°। ५ तदेव।

तत्र नीलीरागः, रीतिरागः, अक्षीवराग इत्येको वर्ग्गः[1]। मञ्जिष्ठारागः, कषायरागः, सकलराग इत्यपरः। कुसुम्भरागः, लाक्षारागः, कर्दमरागः इत्यपरः। हरिद्रारागः, रोचनारागः, काम्पिल्यरा[7]ग इति चतुर्थः। प्रथमे नीलीरागवर्गे नीलीरागाद् रीतिरागाक्षीवरागौ किञ्चिदस्थिरावपि[8] [F. 31. B] नीलरागप्रकाशनाद् दर्शितौ भवतः। मञ्जिष्ठारागवर्गे मञ्जिष्ठारागात् कषायरागसकलरागौ किञ्चिदस्थिरावपि मञ्जिष्ठारागप्रकाशना[1]त् प्रकाशितौ भवतः। कुसुम्भरागवर्गे कुसुम्भरागाल्लाक्षारागकर्दमरागौ किञ्चिदस्थिरावपि कुसुम्भरागप्रदर्शनात् प्रतिकृतौ भवतः। हरिद्रारागवर्गे हरिद्रारागाद् रोचनारागकाम्पिल्यरागौ किञ्चि[द]स्थिरावपि हरिद्रारागप्रदर्शनात् प्रतिकृतौ भवतः[2]। एवमयं यद्यपि द्वादशप्रका[3]रो रागः प्रकाशितस्तथापीतरेषां चतुष्टयेऽन्तर्भावात् प्राधान्याचतुर्धैव भवत्याः कुतूहलात् प्रदर्श्यते—नीलीरागो, मञ्जिष्ठारागः, कुसुम्भरागो[4], हरिद्रारागश्चेति। तत्र नीलीरागं सर्वस्वमपि विश्राव्य वासवद् (?) वाहयेत्। मञ्जिष्ठारागं तु यदृच्छया विश्रावयेत्, न तु विच्छायतापर्यन्तं नयेत्। कुसु[5][F. 32. A]म्भरागस्तु नातिचटुतां विसहते। तस्मात् तं चटुतां विनैवानुकूल्यानुकूल्य विश्रावयेत्। हरिद्रारागः क्षिप्रमेव विरज्यते। अतोऽसौ झगिति[1] विश्रावणीयः। यस्यां च वैशिकोपनिषदि रहस्यमेतद्—यद् व्याघ्रादिव प्रेम्णः सावधानतया सर्वदैवात्मा रक्षणीयः। तत्र रागवशाज्जगति[2] वहवो भुजङ्गा वेश्याभिर्विप्रलब्धाः। तथा हि ते कथयामि, श्रूयताम्।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां
शृङ्गार[3]मञ्जरीशिक्षा समाप्ता।

## [ प्रथमा रविदत्तकथानिका ]

अस्त्यत्र कुण्डि[न]पुरं नाम नगरम्। तत्र च महाधनः श्रोत्रियो महान् ब्राह्मणः सोमदत्तो[4] नाम। तेन च विजयसप्तमीप्रतिविधानेनाभीष्टार्थस्य प्रसवितारं सवितारमाराध्य पश्चिमे वयसि सूनुरवाप्यत। तस्य च रविणा दत्तत्वात्[5] [F. 32. B] रविदत्त इति पिता नाम चक्रे। क्रमेण चायमुपनीतो विधिवदधीतसकलवेदवेदाङ्गोऽधिगतसकलशास्त्रः षोडशवर्षदेशीयः [7]संवृत्तः। अथा[1]त्मनो महाधनत्वमाकलयताऽस्य च भाविनं विनिपातमाशङ्कमानेन तत्प्रतीकाराशया पित्रा शिक्षितः सकलमपि कलाकलापम्। विशेष[2]तो दत्तकादिप्रणीतवैशिकरहस्यानि च ज्ञापितः। एकदा तु रहस्याहूय शिक्षयितुमारब्धः—“वत्स यौवनं नामातिगहनमन्धंतमः, दुःप[3]रिहरं सर्वप्राणिभिः। दुःशीलश्च मदनः, सर्वोन्मादैकायतनं च विभवः। नलिनीदलनिपतितजललवतरलं प्रकृत्यैव मनः। दुर्दान्तद्विरदद[4]र्धराणि चेन्द्रियाणि। निसर्गतयैवाभि[8]लषणीया विषयाः।

१ कुसुम्भा°। २ कुसुम्भा°। ३ प्रधान्या°। ४ कुसुम्भा°। ५ कुसुम्भा°। ६ °चटुनां। ७ सवृत्तः। ८ निसर्गतपेचाभि°।

तत्रापि विशेषतो युवतयः मधुवर्षारम्भशरत्समयप्रभृतयोऽत्यर्थमुद्दीपका[7] ऋतवः । तत्सहायश्च विजृम्भमाणो मकरकेतुः केन नाम निवारयितुं शक्यते । अतस्त्वया प्रथमं अरिषड्वर्गो जेयः । तत इन्द्रियाणि । ततः[6] [F. 33. A] सन्निहितदुष्टजनप्रेरणाः । ततो विलासिनीसंसर्ग्गः । विलासिन्यो हि दृष्टिविषवराङ्गनागनाभयो दूरत एव मनोमोहमुत्पादयन्ति[1] । मूढचित्तस्य च विसरन्ति गुरूपदेशाः । दूरतोऽपसरति शास्त्राभ्यासः । शीर्यते शिक्षा । भिद्यतेऽभिमानग्रन्थिः । विलीयते जात्याद्यभिमानः[2] । द्रवीभवति शीलसेतुः । ध्वंसते धैर्यम् । विलीयते विवेकः । दलति दार्ढ्यम् । पलायते प्रौढिः । प्रमाद्यन्तो हि बहवो विनाशमुपगताः । प्रकृत्यैव त्य[6]क्तस्नेहा खलसङ्गतिर्दूरत एव परिहरणीया । दुःस्वप्नानामिव धूर्तानां दर्शनमनिष्टकारि । पिङ्गवर्गसंवर्ग्गणमनर्गलं द्वारमनर्थानाम् । तौ[4]र्यत्रिकध्वनितं प्रवासनपटहोऽर्थस्य । मनोमृगापहरणव्याधगीतयो गीतयः । विभवस्य मर्मप्रहाराः क्रीडोद्यानविहाराः । अर्थनिम[5]ज्जनानि क्रीडाजलमज्जनानि । लक्ष्मीमहापथयात्रा देव[4](कामदेव ?)यात्रा । विष्टिरिवानिष्टकारिणी योषितां सविकारा दृष्टिः । विवेकारयः सारयः । निग[6][F. 33. B]डबन्धाः पिङ्गगोष्ठीबन्धाः । विभवाकृतानि द्यूतानि । स्खलासनाभयः पण्यरमणीप्राङ्गणभूमयः । अपथ्या वेश्यागृहोपान्तरथ्याः । तस्मादव[1]हितेन स्वजात्यनुरूपयैव चेष्टया व्यवहर्तव्यम् । स्वजातिप[रि]हारेण व्यवहरन्तः के नाम नोपहासपदवीमुपगताः । श्रूयन्ते च पुरूर[2]वःप्रभृतयो महाप्रभावा अपि राजानः उर्वश्यादिवेश्याभिर्वशीकृता इति ।

अथैकदा यात्सु दिवसेषु, पञ्चत्वमुपगते[3] पितरि, तमनुसृतायां च मातरि, कालपरिणतिवशादहेतुकशिमानमागच्छति शोकेऽकस्माच्छृङ्गारशैलू[4]षनर्तनोपाध्यायः समजृम्भत मकरध्वजबान्धवो मधुसमयः । क्रमेण च कोरकनिकुरुम्बकरम्बि[7]तेषु सहकारवनेषु, पञ्चमकला[7][F. 34. A] कषायलाञ्छितेषु कलकण्ठीकण्ठेषु, प्रसववेदनाम्रेडपीडितासु च माधवीलतासु, विरहिजनविसंस्थुलचेष्टावलोकनादिव जात[1]स्तोकहासेषु कमलवनेषु, किञ्चिदङ्गारकिततनुतया प्रथमाभिलक्ष्यधूमादनन्तरमुद्यदल्पाल्पमदनदहनज्वालेष्विव किंशुक[2]वनेषु, विकसितातनुस्तवकोपचितेषु मकरध्वजप्रतापानलेष्विव सर्वतः प्रज्वलत्सु विरहिणां सन्तापजनकेष्व[3]शोकपादपेष्वखिलजनमनोहारिषु विविधमणिनिर्म्मितेषु क्रीडाभूषणेष्विव रतेर्नीलारुणकपिशकान्तिषु प्रस्फुटत्कुड्मले[4]षु, कुरवकानोकहेष्वामोदपरम्परासम्पर्कलोभाद् विरहिजनसंसर्गादिवारतिगृहीतेषु क्वचिदपि स्थितिमकुर्वाणेषु षट्पद[5][F. 34 B]कदम्बकेषु, तरुणतरपल्लवपटावगुण्ठितासु नववधूटीष्विव कमनीयतामुपगतासु निखिलवनराजिषु, त्रिभुवनविजयाय सायका[1]भ्यासमाचरतः कुसुमकार्मुकस्य प्रतिक्षणगुणास्फालनध्वनितेष्विव परितः श्रूयमाणेषु कोकिलकुलक्वणितेषु, वसन्तसमये[2]न सञ्जी-

---

१ दृष्टिविषविषम् । २ विस्मरन्ति । ३ शर्म । ४ °देवयात्रा । ५ राजानदुर्वश्यादि° । ६ घोषको° । ७ °करंधितेषु ।

कृतासु त्रिभुवनैकधानुष्कस्य मकरकेतोरसितकुन्दलतादामनिर्म्मितासु ज्यावल्लीष्विव प्रतिकुसुमपादपमुल्लसन्तीषु[3] भ्रमरमालासु, मधुसमयसमागतानामुपवनश्रियामुत्तंसेष्विव समुल्लसत्सु क्षितिरुहां पल्लवेषु, पथिकहृदयस्थितस्य मदनाशु[4] शुक्षणेः सन्धुक्षणाय दक्षिणामुखात् स्वैरं स्वैरं समुत्सर्पत्यभिनवोद्गतवकुलकुसुमामोदवाहिनि मलयानिले मिथुनानुरागेष्वि[5] व मूर्तेष्वनवरतमापतता मलयानिलेन प्रतितरु परित स्तरङ्गमाणेषु महाराजनु(न?) चीनांशुकविरचि[6] [F. 35. A] तेषु मन्मथध्वजेषु, क्रीडान्दोलनप्रसक्तानामतिनिर्दयप्रियतमभुजाश्लेषनिर्भयानामङ्गना नां कामिजनकुरङ्गव्याधगीतिषु स्मर[1] नृपतेर्विजयराज्यघोषणास्विव प्रतिदिशमुल्लसन्तीषु विलासगीतिषु, को हि नाम प्रियजनवियुक्तेषु कामिष्वस्माकमायतिं[2] सहत इति अतिकरुणयेव कृशिमानमागच्छन्तीषु रजनीषु, आः कथमनङ्गबान्धवे निखिलसुखधामन्यपि मधुसमये असदाग[3] मनारम्भेऽप्यतितरां दूयन्ते वियोगिन इत्यनुशयादिवोपजायमानतापप्रसरेषु वासरेषु, विकचकमलिनीकाननेभ्यः पवनोद्धू[4] तैः समुत्सर्पद्भिर्बहलरजःपटलैर्विरहिविनिपातसूचकैरुत्पातदाहैरिवाश्लिष्टेषु दिक्तटेष्वतिघनस्फुटितकोकनदकानना[5] भिरुपवनदीर्घिकाभिर्निरन्तरोद्भिन्नकिसलयैः प्रमदवनपादपैरुद्गच्छदनच्छस्तबकला[6] [F. 35. B] ञ्छितैरशोकतरुभिः प्रतिदिशमुन्निद्रकुसुमनिकरहारिभिः किंशुकवनैर्विरहिणां सर्वतः समुत्थितमदनदावानल इव प्रतिभासमाने भुवन[1] तले, एकदा तु विटवटुकपेटकेन मत्तद्विरद इव रविदत्तः स्मरन्नपि गुरूपदेशान्–'अद्य भगवतो मकरध्वजस्य यात्रामहोत्सवः, स यदि[2] न दृश्यते तदा किं जीवितेन, किं वा विफलेनामुना लोचनयुगलेन? यद्यपि न ते कौतुकमस्ति तथाप्यस्मदनुरोधाद् भद्र! भवता तद्दर्शनाय[3] गन्तव्यमेव, भव्यो भवान् यदि न गच्छसि तदा किमस्माकमियत्यपि न वशिता विद्यते येन भवन्तमात्मनोऽभीष्टं कारयामः। तदागच्छ गच्छामः'–इ[4] त्यभिधीयमानो बलादेवानिच्छन्नपि तदनुयायिनेव यौवनेन प्रेर्यमाणस्तद्वयस्यैरिवेन्द्रियैः पुरस्तादाकृष्यमाणो निरन्तरोद्भिद्य[5] माननानावनराजिकोरकतया समुल्लसदेनककुसुमतया वा आयुधागारमिव भोग्यास्थानमिव विलासभवनमिव भगवतो मकरध्वजस्य[6] [F. 36. A] यौवनमदमत्तकामिनीवदनमदिरासेकसंक्रान्तमिव सौरभं कुसुमपरिमलच्छलादुद्वमद्भिर्बकुलपादपैरुद्भासमानम्, क्वचित् तरुणिमो[1] न्मदविलासिनीकुचकलशसंश्लेषादुन्मिषद्बहलकुड्मलैः कामिभिरिवोद्धूतपुलकजालकैः कुरवकतरुभिरध्यासितक्रीडाशैलोपश[2] ल्यम्, क्वचिन्मदतरङ्गितोपान्तया कुवलयदलदामदीर्घया मृगदृशां दृशा पात्रीकृतैरुल्लसन्निविडमञ्जरीनिकरचारुभिः कुसुमायुधस्या[3] युधागारैरिव तिलकपादपैरुपशोभितक्रीडातडागपरिसरम्, क्वचिदलक्तकरसरञ्जितेनेवोल्लसन्निसर्गशोणिम्ना चरणकमलेन कामिनी[4] भिस्ताडितानामुन्मीलदतनुपल्लवोल्लासिनामुद्गच्छदस्तोकस्तवकलाञ्छितानां मदनदहनास्थानसद्मनामिवाशोकपादपानां शालिकाभिरल[5] ङ्कृतानङ्गभवनप्राङ्गणोपान्तभूमिभागम्, क्वचिन्मन्दमन्दमुन्मदविलासिनीकण्ठ-

---

१ °सालासु। २ परितंस्तर°। ३ °मङ्गतानां। ४ °दनस्य°। ५ योग्या°। ६ °पादपैरुद्भास°।

कुहरोद्गताभिर्मसृणमधुराभिः पञ्चमकाकलीभिरुद्भिद्य[6] [F. 36. B]मानातिनिबिडक-पिशकुसुमश्रेणितया कार्तस्वरग्रैवेयकैरिव रतेर्विरहकविटपकैरुद्भासि[2]......[दीर्घी]कानीरलेखम् । पाक[3]......[1] द्विस्फुटतामेलाफलानामामोदेन सञ्चरतो वसन्तगन्धद्विप-सान्द्रसुरासौरभेणेव प्रस[4]...... दिगन्तम्, क्वचिदुन्मिषल्ल[5]......[2] मोदलोभादभि-धावतामितस्ततः सञ्चरद्वनदेवताकाञ्चीकलाकलापकिङ्किणीकणि[त][6]....... भिर्मधु-कराणां झङ्कृतिभि...[8(3)] मन्मथोन्माथम्, क्वचिन्मुखरशुककुलै[9]रर्धजग्धानां कक्कोली-फलानां विसरता परिमलेनामन्त्र......[10] रणचक्रवालमुन्मिषन्निबिडम[4]ञ्जरीजालक-स्थगितनिखिलाभोगमण्डलतया[11] वसन्तश्रियोल्लासितैर्मदननरपतेः कनका[12]...... घन-च्छायैः[5] [F. 37. A] सहकारतरुभिरुपशोभमानम्, दूरादेव विरहिणामाकम्पितहृद-याभिर्मधुसमयसमारोपित[13]..... सततसन्निहितशिलीमुखा[1]भिः स्मरधनुर्लताभिरिव कुसुमवीरुद्भिरुद्भासमानं कुसुमाकराभिधानं क्रीडोद्यानमगच्छ[त्][14]......स्फटिकमणि-शिलासङ्घातनिर्म्मि[2]तं मूर्तयशःपुञ्जमिव त्रिभुवनविजयार्जि[त]मकरकेतोरायतनमपश्यत् । तस्मिंश्च शोण[मणि][15]......रणोपविष्टां रागाधि[देवता[3]मिव] त्रिभुवनविजयवैजयन्ती-मिव स्मरस्योन्मादविद्यामिव भुवनत्रयस्यामृतशलाका [मिव][16].. तलोचनानामन्या[17],.....[कां][4]चिदेकामङ्गनामपश्य[त् ।] तां चावलोक्य[18] समुपजातविस्मयेन[19] विस्मृता-न्यकरणीयो मनस्य[20]....रूपनिर्म्माणकौशलं[21]...[5] [F. 37. B] येनेयमपहसिताखिलत्रि-दशसुन्दरीसौन्दर्यविभवा परिहृतापरसृष्टिव्या[22]पारेण निजनिर्म्माणकौशलप्र[1]तिपादनार्थ-मिव महता प्रयत्नेनो[23]त्पादिता । यतोऽस्याः[7] सुन्दरा अप्यवयवोपादानपदार्थाः प्रत्यवयवमेकैकशोऽपि नानुकुर्वन्ति[2] कमलकुवलयाशोककिसलयेन्दुप्रभृतयः ।

दृष्ट्वा चाचिन्तयत्—अहो सोऽयमसदृश उल्लेखः प्रजापतिसर्गस्य, निरुपमः प्रकारः स्त्रीजा[3]तेः, नूतनो रूमाकरो[25] लावण्यस्य, सञ्जीवनौषधिर्मकरकेतोः, नवीन आकार आकारस्य, तारुण्यस्यापि तारुण्यावतारः, लवणिमा[4] लावण्यस्य, रूपस्यापि[5] विरूपावेशः, अमृतरसपूरः प्रेक्षकदृशाम्, कर्पूरशलाका तरुणिजनलोचनानाम्, अन्यः प्रजापतिरनङ्गवपुषो निष्पादने, अजय्यनूतनास्त्र[6][F 38. A] लाभः कुसुमसायकस्य, निखिलजनहृदयभ्रम-कारकहेतुरन्यो भ्रामकः, मूर्तिमती सफलता सकलजननयनसृष्टेः, अपरा विलासानां[1] विलसनभूमिः, भ्रमैकहेतुर्निजविभ्रमैर्लोकानाम्, एकमायतनं शृङ्गारस्य, जीवितं व्युत्पत्तेः,

---

१ °स्वर्यैवेयकै° । २ विनष्टान्यत्र चतुःपञ्चाक्षराणि । ३ विनष्टान्यत्र पञ्चषडक्षराणि । ४ विनष्टान्यत्र पञ्चषडक्षराणि । ५ विनष्टान्यत्र त्रिचत्वार्यक्षराणि । ६ विनष्टान्यत्र त्रीण्यक्षराणि । ७ संभूति । ८ विनष्टान्यत्र त्रीण्यक्षराणि । ९ °कुलैर्वध° । १० विनष्टान्यत्र चत्वार्यक्षराणि । ११ मंडलतयां । १२ विनष्टान्यत्र त्रिचत्वार्यक्षराणि । १३ विनष्टान्यत्र चतुःपञ्चाक्षराणि । १४ विनष्टान्यत्र चतुःपञ्चाक्षराणि । १५ विनष्टान्यत्र त्रिचत्वार्यक्षराणि । १६ विनष्टे अत्र द्वे अक्षरे । १७ विनष्टान्यत्र त्रिचत्वार्यक्षराणि । १८ चावलोकय । १९ °विस्मयेत् । २० विनष्टान्यत्र द्वित्राण्यक्षराणि । २१ विनष्टान्यत्र द्वित्राण्यक्षराणि । २२ °र्व्यापारेण । २३ प्रयत्नेनोत्पादित. । २४ °तोस्या । २५ रूमाकरो ।

रङ्गशाला वैदग्ध्यलासकस्य, परा प्र[2]कृष्टता प्रकर्षस्य, असदृशमायतनमनौपम्यस्य, उच्छ्व-सितं सौभाग्यस्य, प्राणितमाकारप्रकर्षस्य, नृत्याधिदेवता शृङ्गारविल[3]सिता[3]नाम्, सृष्टिमुद्रा प्रजापतिसृष्टेः, निरुपमस्वामिनी मनोभवस्य, द्राविकपुत्रिका निखिलजनहृदयानाम्, आकृ-ष्टिविद्या सकलजनमानसाना[4]म्, शृङ्गारस्यापि शृङ्गारः, विभ्रमाणामपि विभ्रमः, मधु-रिमा माधुर्यस्य, औ[दा]र्यमुदारतायाः, उच्छ्वसितं हरनयनानलकवलीकृतस्यापि मक[5]र-केतोः, विदग्धता वैदग्ध्यस्य, भाग्यभूमिः सौभाग्यस्य, उत्पत्तिक्षेत्रं प्रेक्षकसुखानाम्, मोह-नपिच्छिका भुवन[6][F. 38. B] लोकस्य, इन्द्रजालिकविद्या मूर्तिमती विदग्धजनमनः-स्वीकरणे, अरुचिबीजमेकमितरकमनीयपदार्थानाम्[1], सौभाग्यस्यापि सुभगंकरणम्, स्मर-विहसितमपरप्रजापतिसृष्टेः, मूर्तिमती गर्वलक्ष्मीर्मनोभव[3]........,कमनीयताया अपि कान्तिः, रम[2]णीयताया अपि रामणीयकम्, परिणतिर्विधिशिल्पस्य, एकं घुणाक्षरं प्रजा-पतिसृष्टेः,[3]......महेनोपधेर्मकरध्वजठकस्यापरः शशलक्ष्म्याः,[3] जनवदनकमलविकासत्वे लडहलहरी शृङ्गारसागरस्य, चतुरिमा चातुर्यस्य, नवत्वं नूतनतायाः, नूतन उद्वेगः प्राक्त-नायाः प्रजापति[1]सृष्टेः, सौन्दर्यं सुन्दरतायाः, मनोभवरङ्गशाला निखिलजनरञ्जकत्वे, कान्तिसर्वस्वं निखिलरमणीयतायाः, उत्पत्तिबीजं विस्मयस्य, स्मृ[5]तिप्रमोषः सादृशस्य, अवशिक (?) कमनीयनिर्म्माणस्यैक आश्रयो निखिलरमणीयवैलक्षण्यस्य, लवणिम्नोऽपि लव-णिमा, विला[6][F. 39. A]सो विलसितानाम्, असदृशरागता रागस्य, मोहनविद्या त...... चारिणी, तरुणिमा तारुण्यस्य, मोहस्यापि मोहः, चमत्कृतेरपि चमत्कारः, लाव[1]ण्यस्यापि बहुमानहेतुः, एकमवस्थानमौपम्र्यस्य, अद्वितीयं वैरूप्यकरणं शशिकमलकुवलयेन्दीवर-प्रभृतीनाम्, अनवस्था रूपातिशया[2]नवस्थायाः, ज्यावल्ली कामकार्मुकस्य, मूर्तस्थानं मनोभ-वस्य, रतिरपि रतेः, दौर्भाग्यदानैकदेवता निखिलस्त्रीजातेः, उच्छेदैकहेतुः सा[3]मान्यबुद्धेः, उत्पत्तिनन्दनं शृङ्गारकल्पद्रुमस्य, गृहीतमूर्तिः सारिमा संसारस्य,[3]......देवतासुखानाम्, अनौपम्यस्याऽप्यनौपम्यम्। नूतनो[4]लासकः सकलजननयनपुत्रिकानर्तकीनाम्, नूतन-प्रतिपक्षो मदनजन्मनि पिनाकपाणेः,[3]......ता नयनामृतरसस्य, विजयप[5]ताका राम-णीयकस्य, अत्यन्ताभावः साम्यस्य, छिन्नतर्षो निखिललोकलोचनानाम्, अजरामरताहेतुः कुसुम[6][F. 39. B] सायकस्येति विचिन्तयन्नेव स्तम्भित इव मूर्च्छित इव लिखित इव मोहित इव स्मरशरनिकरनिर्म्मथितमूर्तिः सुचिरमतिष्ठत्।

सापि तमभि[1]नवे वयसि वर्तमानमतिमनोहराकृतिमतनुविभवश्रिया स्वीकृत-त्वादतिस्निग्धच्छायमवलोक्य सञ्जातरागेव क्षणमभूत्। अतिस्निग्धया[2] च दृशा सविभ्रम-मुत्पादितानुरागं मुहुर्मुहुरपश्यत्। सच्छायतयैव विज्ञाततद्विभवोत्कर्षैवमचिन्तयच्च—अहो बहोः कालादासादि[3]तं निधानम्, चिरात् पल्लवितमाशाद्रुमेण, कुसुमितं कामनया, फलितं

१ परोपकृष्टता। २ °विलासितानाम्। ३ विनष्टान्यत्र कानिचिदक्षराणि। एवं अन्यत्रापि ज्ञेयम्। ४ °मौपमस्य। ५ °नोपमस्या° ६ सच्छातैतयैव।

मनोरथैः, तदतः परमुल्लसन्तु कृतकविभ्रमाः, प्रकाशीभवतु वै[4] शिकरहस्यमिति विचिन्त्य सन्निहितया स्वसख्या सह सविभ्रमं सस्मितमन्तरान्तरा मुहुर्मुहुस्तमालोकयन्ती गोष्ठी-व्याजेन किमपि[5] [F. 40. A] किमप्यभापत। रविदत्तोऽपि यद्यप्यननुभूतमदनचेष्टस्तथापि तत्कालमेव, मकरध्वजोपदिष्टानात्मगतानेतदीयविभ्रमान् वि[1] निर्ज्ञाय[1] मय्यनुरागिणीय-मित्याकलितवान्। अभूच्च द्विगुणतरमन्मथोन्माथव्यथितमानसो यथाहमेतैराकलितचेष्टो न भवामी[2] ति मन्यमानः शनैः शनैरन्तः प्रविश्यापहस्तितत्रिभुवनदर्प्पस्य भगवतः कन्द-र्प्पस्य पूजां विधाय विरचितप्रणामो निर्जगाम। ततः[3] स इतस्ततः क्रीडोद्यानावलोकन-व्याजेन परिभ्राम्यन्ननन्यचित्तस्तामेव चिन्तयन् स्वगृहान् प्रति गन्तुमारेभे। सापि तद्-दृष्टिपातमपरि[4] हरन्ती सखीभिः सह विविधाः विलासचेष्टाः प्रकटयन्ती तदनुगामिन्येव स्वगृहानयासीत्।

अथ द्वित्रिनाडिकावशेषे वासरे विनयवती[5] [F. 40. B] सङ्गमिकाभिधानामात्म-निर्विशेषां सखीं तद् गृहान् प्रति प्राहिणोत्। गत्वा च सा तद् द्वारि क्षणमिव स्थित्वा तदनुचरैर्वहुभिर्निवेदिता[2] प्रा[1] विशत्। उपविश्य च 'अस्ति विज्ञाप्यम्, रहो दीयताम्' इत्यभिधाय विरराम। रविदत्तोऽपि तदनुचरीं तामवगम्य जातपरितोषस्तां वटुपरिषद[2]-मन्यतो गमनाय भ्रूसञ्ज्ञया[3] न्ययुङ्क्त।

अथ सा लब्धावसरा वक्तुमारेभे—"भद्र यद्यपि भवज्जातिविरुद्धमिदं तथापि स्वस्वामिन्याः पीडयार्त[3] हृदया विज्ञापयामि, श्रूयताम्—यतः प्रभृति मदनयात्रायामस्म-त्स्वामिन्या दृष्टिपथमागतो भवान् ततः प्रभृति स्मरशरसहस्रच्छिद्रिते[4] हृदि झगिति प्रविष्टः। तत एव प्रभृति सशल्यं हृदयम्, सोन्मादं चित्तम्, सोन्माथं वपुः, दीर्घोष्णं श्वसितम्, त्वदालोकनकुतूहलि चक्षुः, त्वद्गु[5] णश्रवणादाह्लादिनी श्रुतिः, त्वदभिधान-गर्भा भारती, भवत्सङ्गमया मनोरथाः। भवन्तश्च धर्म्मप्रधानाः, तद् दीयता[6] [F. 41. A] मस्माकं सखीजीवितभिक्षा। सकृदपि स्वगमनानुग्रहेणानुकम्प्यतां वराकी। भवदीयेष्वपि स्मृत्यादिशास्त्रेषु स्त्रीवधपातकमतिगरीयः प[1] ठ्यते। यदि त्वमद्यैव गमनेन नानुगृह्णासि तदा तामुपरतामवधारय"—इत्यभिधाय व्यरंसीत्।

रविदत्तोऽप्येतदाकर्ण्यैकतो लज्जयाऽन्यतो म[2] दनेन, एकतो विवेकेनान्यत उन्मा-थेन, एकतो गुरूपदेशस्मरणेनान्यतो यौवनकदनेनान्तःपरिक्लिश्यमानः, किं करोमि इत्यनव[3] स्थितचित्तवृत्तिः क्षणमतिष्ठत्। स्थित्वा च भवत्विदमत्र साम्प्रतमिति विचिन्त्य सङ्गमिकां प्रणयपेशलमाबभाषे—

"किमन्यदपि अभिधेयम्[4]", न खल्वधन्येषु त्वत्स्वामिन्याः प्रमादादपि दृष्टिर्निपतति, किं पुनरननुरागनिर्भरं हृदयम्। सर्वोऽपि जनस्तामर्थयते, सैवार्थयत इति मनो[5] रथानामप्यपथमेतत्। अतो यद् भणति भवती तत् सर्वमेवाङ्गीकृतं मया। किन्त्वस्मज्जातिविरुद्धमिदम्। अतो यथा नासात्स्वजनगुरुपरं[6] [F. 41 B]

---

१ विनिर्ज्ञाय। २ °दिताऽप्रविशत्। ३ भ्रूसञ्ज्ञायां। ४ तत्स्वामिन्या।

[ अत्रादर्शे ४२–४३ अङ्काङ्कितं पत्रयुग्मं विनष्टम् ]

........स्यै यद् दीयते तद् अल्पतरं प्रतिभातीति निश्चित्य गुरुजनेन विदितवृत्तान्तोऽप्य-पहाय व्रीडामपहस्त्य गुरुजनोपदेशान् महार्हाण्याभरणा(1)नि सुवर्णसहस्राणि वस्त्राणि च विचित्राणि प्रतिदिवसमदात् । तया च तस्य नीलीरागतां सम्यगाकलय्योद्यानिका-तृतीयोत्सवदेवयात्रो(2)पयाचितकादिभिः प्रकाम[1]याचनैश्च निःशेषमर्[2]थजातमाच्छिद्य निस्तुषीकृत्य सङ्गमिकामुखेने[3]दमभ्यधायि यत्–

'अद्य परिचितो वणि(3)क्सूनुर्वसुदत्तनामा 'महतीमर्थोपार्जनां[4] विधाय सुवर्ण-द्वीपादायातः । स च विनयवत्यामत्यन्तानुरक्त इतस्ततो लटक्षुद्रकश्चास्ते । भणति(1) चैवं यद्येकामपि निशां मामाकारयति भवती तदा सर्वस्वमपि प्रयच्छामि । तद् भवता दिनद्वयं त्रयं वा स्वगृह एव स्थातव्यं[5]......(5)[F. 44. A]पि भवतैव दत्तं भवति, इद-मपि भवत एवोपयोगं यास्यति' इत्यभिधाय निःसा[6]रितः । अथ गृहे स्थितो रविदत्तः, किं सा चिन्तयति, किं[7]............(1) कथं तेन सह सम्प्रयुज्यते, किं तस्याः सोऽपि न वल्लभो भविष्यतीति चिन्तयन् न भुङ्क्ते, न शेते, न किञ्चिज्जल्पति, न शृणोति, कण्ट-कवि(-)द्ध इव मर्म्मणि, वृश्चिकदष्ट इव विचेष्टमानः, क्वचिदपि न शर्म्म लेभे । गतेष्वथ द्वित्रेष्वहःसु चपलकसहायो विनयवत्याः प्राङ्ग(3)णे टिरिटिल्लितानि कुर्वाणः, पुनः पुनरित-स्ततो गतागतान्यकरोत् । न चैनं कश्चिदालपति, न पश्यति, दृष्ट्वाऽप्यवधीरयति । तथापि द्विगु(4)णतरोपजायमानानुरागसन्तापो व्यलीकाशयोद्ग्रीवस्तां दिशमवलोकयं-स्तद्दिनमत्यवाहयत् । अपरेद्युस्तथैव भ्रम[8]माणस्तदीयेन(1) [F. 44. B] केनाप्यनालप्यमानः सङ्गमिकायाः सदनमगात् । तत्र तयापि नाभाष्यमाणस्तामभाषत–

'सङ्गमिके! कृतं मया त्वदीयं वचो, गतानि तानि द्वित्राण्य(1)हानि तदद्यापि कोऽयं विलम्बः' इत्युक्तेऽवधीरितोऽपि स[9] सङ्गमिकया, तत्पृष्ठानुसारी पुनः पुनस्तदेव ब्रुवाणोऽपरिचित इव सङ्गमिकया सक्रोध(2)मिदं[10]माभाषि–'को भवान्? कानि च तानि द्वित्राण्यहानि? को विलम्बः? इत्युन्मत्त इव किमिति रे प्रलपसि?' इत्य[ति]निर्भ-र्त्स्यमाणोऽपि तया सह गता(3)गतानि कुर्वन् तामेवावलगन् द्वित्रीणि दिनान्य[11]त्यवाहयत् । दूरस्थितश्च विनयवतीं पश्यन्नुन्मत्तक[12] इव हस[न् विवि]धा[ः] शृङ्गारचेष्टा[ः] करोति । तदी(1)यपरिजनेनोपहस्यमानोऽपि न किमप्य[13]ज्ञासीत् । अथ दुराशयेव सङ्गमिकया दत्त[14] .... [पु]नः पुनरिदमचिन्तयत्–'भवत्व(5)नेनैतावतैव कृतकृत्योऽहं

१ प्रकासयाचनैश्च । २ °मयर्थजात° । ३ °सुखेन° । ४ °मर्थोपार्यना । ५ विनष्टान्यत्र चतु.पञ्चान्य-क्षराणि । ६ नि सरित. । ७ विनष्टान्यत्र द्वित्राण्यक्षराणि । ८ अम्यमाण° । ९ न । १० °माबभापे । ११ दिनानीत्यवाहयत् । १२ पश्यंतुन्मत्तक । १३ किमप्याज्ञासीद् । १४ विनष्टायन्त्र १२–१३ अक्षराणि ।

यद्दूरे स्थितोऽपि शरत्समयजलदपटलनिर्म्मुक्तमिन्दु[7]............ इयतैव निर्वृत-[8]
[F. 45 A] हृदयः कियत्यपि दिनान्यनैपीत् । ततश्च सङ्गमिकया प्रेरितो विनयवती-
विटानाम[2]............ प्यश्रुतमपहस्त्य गुरू[1]पदेशमवगणय्य लज्जां तदीयपरिजनेनो-
पहस्यमानस्तिरस्क्रिय[3]माणो[4]..................नैकतत्परस्तदीयदर्शने[2]नैवात्मनो जन्म सफलं
मन्यमानो जीवितान्तावधि क्षपितवान् ।

तदित्थं पुत्रि ! प्रथममेवाकलितदृढानुरा [ग][5]........क्रियमाणं सकलमपि सफ-[3]
लतामवगाहते[6] वैशिकरहस्यम् । यथा हि नीलरक्तं वासो नानाप्रकारैः क्षारादिभिः
क्षाल्यमानमपि न निजरागमुज्झ[7]त्येवं नीलीरागः पुरुषो[4]ऽपि शतशः शकलीक्रिय-
माणोऽपि न निबिडरागितां परित्यजति ।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरी[5]कथायां
रविदत्तकथानिका प्रथमा ।

---

## [ द्वितीया विक्रमसिंहकथानिका ]

इत्यभिधाय विरतवचसि विषमशीलायामुपजातकुतूहला शृङ्गारमञ्जरी पुनरि-
दमवो-[6] [ F. 45. B ]चत्—

'अम्ब ! कथितो नीलीरागः । वर्द्धते मम कौतुकम् । तत् कथ्यतामिदानीं
मञ्जिष्ठारागः' इति श्रुत्वा सा कथ[1]यितुमारेभे—

अस्त्यत्र तामलिप्तिर्नाम नगरी । तस्यां प्रतापमुकुटनृपतिपरिपालितायां विक्रमसिंहो
नाम राजपुत्रः प्रतिवसति । स च महाधन[2]स्त्यागवानुदात्तो विलासैकरसिकः
शूरः । तेन चैकदा वेश्यापाटकं प्रति बम्भ्रम्यमाणेनैकदंष्ट्राभिधानायाः कुट्टन्यास्तनया
मालतिकाभिधाना[3] व्यलोकि । सा च जीवितं यौवनस्य, प्राणितं लावण्यस्य, उच्छ्वसितं
सौभाग्यस्य, आत्मा रूपस्य । यस्याश्च परिपूर्ण[8]शशधरस्यार्चया रात्रिन्दिवमखिल[4]
लोकलोचनाप्यायनार्थमिव वदनेन्दुरपर इवेन्दुरसृज्यत भगवता प्रजापतिना । सा च
वसुदत्तनाम्नो वणिक्पुत्रस्य गृहवार्त्तया अवतस्थे[5] । स च तामालोक्य राजपुत्रः
कन्दर्पशरप्रहारजर्जरितहृदयः कष्टं दशान्तरमवाप । प्रियंवदकनामानं निजमनुचरं
तां प्रति प्राहिणोत् । ततः स गत्वा तद्व-[6][ F 46. A] चनात् तामवादीत्—

'भद्रे ! अयं राजपुत्रो विक्रमसिंहस्त्वामवलोक्य मन्मथव्यथितचेतास्त्वय्येवानु-
रक्तः, कथमियं प्राप्यते इति मया सहालोच्य मामेव प्रे[1]षितवान् । तदुच्यतां यदत्र

---

१ विनष्टान्यत्र १२-१३ अक्षराणि । २ विनष्टान्यत्र १२-१३ अक्षराणि । ३ स्तिरस्कृयमाणो । ४ विनष्टा-
न्यत्र १२-१३ अक्षराणि । ५ विनष्टान्यत्र द्वित्राण्यक्षराणि । ६ °गाहने । ७ °मुझत्येवं । ८ परिमर्ण° ।

साम्प्रतम्' इत्यभिधाय तूष्णीमभूत्। ततो मालतिकाऽपि तदाकर्ण्येदमवोचत्—'मामपि तदवलोकनात् प्रभृति तथा कथञ्चिन्म[2]न्मथः पीडयति यथा कथयितुमपि न शक्यते। किन्तु वसुदत्तगृहवार्ताङ्गीकरणपारवश्येन किमपि कर्तुं न बुध्यते। यतोऽयमीदृश एवास्मदी[3]ये समयः। समयोल्लङ्घनं हि क्रियमाणं त्रपाकरमनुचितं च भवति। अतः किमहं करोमि। कतिपयैः पुनरहोभिरतिक्रान्तैरेकमपि व्यतिकर[1]मुत्पाद्य तथा प्रयतिष्ये' यथा तेन सह सङ्गमो भवति। नायमर्थस्तथाभीष्टस्तस्य यथा मम, अवसितप्रायश्च तदवधिर्वर्तते' इत्यभिधाय प्रियंवदकं व्यसृजत्। प्रियं[5]वदकस्तु गत्वा तदनुरागपुरःसरां प्राप्त्याशां विक्रमसिंहस्याचचक्षे। [6][F.46. B]

*[ अत्रादर्शे ४७ अङ्काङ्कितं पत्रं विनष्टम्]*

.कहृदयानि। कुटजोऽपि रागसागरमवर्धयं[स्]तरलतरतडिल्लताप्रसरजिह्वस्य बलाकावलिविकटदशनपद्धतेर्दलिताञ्जनपुञ्जमेचकस्य प्रबल[1]झञ्झानिलसमुच्छलद्धलधूलीधूसरशरीरस्य जलदसमयरजनिचरस्याद्भुतं रटितमाकर्ण्य स्फुटितहृदयानामिव पथिकानां विगलि[2]तैरसृग्विन्दुभिरिवेन्द्रगोपकैरुपाचीयत[2] निखिलमप्यवनितलम्। सजलजलधरावलोकनप्रहर्षादुत्कण्टकितमिव कदम्बकुसुमैः, पथिक[3]हृदयोद्य[3]न्मदनदहनसम्पर्कात् समुत्थितज्वालमिव स्फुटितकन्दलसमूहैः, जलधरप्रमुक्तसलिलासारलब्धाभिषेकतया सच्छत्रमिव शि[4]लीन्ध्रैः, आग्रहगृहीतमपि मानाडम्बरमुत्सृज्य प्रियतमेषु प्रणता मानिनीरवलोक्य जातहास्यमिव स्फटिककुटजैः, प्रबलजलधरपट-[5][F.48. A] हध्वनितश्रवणप्रमोदात् प्रवृत्तनृत्त[4]मिव प्रचलाकिताण्डवैः, समुन्नतपयोधरां दिवमवलोक्य प्रवृद्धरागमिव पल्लवितवनराजिभिः, विरहवे[1]दनाकुलितपथिकप्रणयिनीकरुणया साश्रुप्रवाहमिव स्रवद्भिर्निर्झरैः, सेन्द्रकार्मुकमलिकुलश्यामलमनवरतोन्मुक्तसलि[2]लासारमुन्नदज्जलधरपटलमवलोक्योत्कलिकाकलितामिव व्याकुलितकल्लोलिनीसहस्रैरखिलमपि क्षितिवलयमभूत्।

ततः[3] स एकतो मदनेनान्यतोऽनुरागेणापरतः पयोदसमयेनान्यतस्तद्विभ्रमस्मरणेन[5] मुहुर्मुहुः कदर्थ्यमानः कष्टां दशामनुभवन्[6](4) उत्कण्ठुलः कथं कथमपि प्रावृषमनैषीत्। सा तु बहिःस्थितमप्येनमसजन्त्यप्यात्मीयवेशदर्शनादिभिस्तु वरयित्वरञ्जनयोग्यमाकल[5]-[F.48. B] . ..†यितुमिच्छन्ती याचितान सुं[र्व]वसुदत्तमप्रतिपद्यमानमप्यमोचयद्। अथ सा स्वदूतीं मधुकरिकाभिधानां विक्रमसि[1].... नेदमवादीत्—'राजपुत्र! म[या] स्वा विहितं स्वामि ... .चितं यं वणिक्पुत्रो वसुदत्तस्तत्क्रियतामागमनेन[2]...... .....स तु तथैव प्रतिपद्य तयैव सह तद्भवनं जगाम ......तगौरवः[1] कृतशयनीयोपचारस्तत्रैव मालतिकया[3].... निशामनैषीद्। एवं यथैकां तथा बह्वीरपि रजन्यः ...... चयित्वा

१ प्रतयिष्ये। २ °कैरपचीयत। ३ हृदयोदात्। ४ प्रवृत्तवृत्तमिव। ५ °स्मरणेनु।
६ °भवमनुत्कण्ठुलः। † ४९ तमस्य पत्रस्य कियदंशस्य त्रुटितत्वादिमान्येव वाक्यानि पठितुं शक्यानि।

प्रचुरमर्थजातं वितीर्य स्वगृह एव सु[4]... ......पि वासरेषु मालतिका पुनरध्यात्मनस्त-द्व्य.........हानानिनाय । ततः स तथा रञ्जितो[5]...........श्लोकमेवामन्यत । ततः सा[6]............ [F. 49. A] ......कारयत्यन्यैर्विविधैः प्रकारैरर्थमर्ज[1]... ......षु कियत्स्वपि वासरेष्वात्मनोऽनुचरं प्रियंवद[कं]......प्राहिणोत् । ततस्तया स्वयमागत्य शृण्वता बहू[2].........यि—'त्वया मम प्रदत्तमिदमङ्गुलीयकं प्रियंव-.........इत्यभिहिते मालतिकया विक्रमसिंहोऽभ्यधत्त । ना[3]...............यात इति । ततः प्रभृति तामवश्यां मन्यमान.........नापि न गच्छति न च किमपि प्रयच्छति । नाप्यनुरागसु[4].........मानो मञ्जिष्ठारागः अथ [ते वि] च्छायतां न चा .........त्यजति । किन्तु मञ्जिष्ठारागवत् यथा यथा क्षाल्यते तथा तथा[5]...... ......एवंविधेषु पुत्रि ! सर्वस्वा[हर]णादि पीडनं...यो विहितेऽप्यस्मिन् यद्यप्यसौ न विरज्यते तथापि विच्छायतां भ-[6] [F. 49. B] जति, अतो नातिपीडनीयः ।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां विक्रमसिंहकथानिका द्विती[1]या ।

## [ तृतीया माधवकथानिका ]

अथ शृङ्गारमञ्जर्या—'अम्ब ! न खलु त्वत्कथिताभिः कथाभिर्मे तृप्यति श्रोत्रे-न्द्रियम् । अतः कथ्यतां कुसुम्भरागग्रहणो[2]पायवृत्तान्त' इत्यभिहिते विषमशीला कथयितुमारेभे—

अस्त्यत्र विदिसा नाम नगरी । तत्र भुजङ्गवागुरा नाम कुट्टनी । तस्या दुहिता कुवल[3]यावली नाम । सा च रूपयौवनलावण्यविभ्रमैकभूमिरतिशयलब्धिप्रधाना ख्याताऽस्ति । तस्याश्च वेश्यावृत्तेनार्थमर्जयन्त्याः कालवशादे[4]कदा स्वाध्यायी नायक-माधवाभिधानः सिंहलद्वीपादुपार्जितानन्तवित्तस्तां नगरीमाजगाम । स च तस्याः ख्याति-माकर्ण्य ग्रहणकं दा-[5] [F. 50. A] पयित्वा तया सह रात्रिमेकामवसत् । तस्यामेव रात्रावत्यन्तमावर्जितेन तेन प्रातः प्रभूतमर्थं दत्वा तस्मिन्नेवाह्नि साऽत्यर्थं रुचिताख्यौ-चि[1]त्यान्मोचिता । दिनद्वयं त्रयं प्रतिपाल्य भूयोऽपि तया स आहूतः । पुनरपि तथैव स्नानभोजनादिभिरुपचारैरुपचरितः पुनस्तथैवोपि[2]तः । एवमाकारकमोचनकैस्तया सह सुखमुपभुञ्जानस्य बहूनि दिवसान्यगच्छन् । अथ तयैकाक्षैकं विधाय नायकमाधवो विश्रा[3]वयितुमारब्धः । बहुभिश्च दिवसैः सर्वमप्यर्थं विश्रावितः । विश्रावितार्थश्च स एवमचिन्तयत् यथा—'इयमेव मां निर्धनं ज्ञात्वा निर्धा[4]टयिष्यति, तद् यथा छाया-

१ कुसुम्भा । २ कथितुमा° । ३ रुचिताख्योचित्यान्मोचिता । ४ °क्षणक । ५ निर्धारयिष्यति ।

नाशो न भवति तथा क्रियते' इति चिन्तयत एवास्य प्रोत्साहनाय स्फुटत्कुटजहारि-विरलपरिस्फुरच्चित्र-[(5)] [F. 50. B] शिखण्डिमण्डलाडम्बरमुद्वहन्त्युन्मिषदसमच्छन्न-काननावनिनिर्म्मुक्तध्वनिजलधराश्लि[(1)]ष्टदिक्तटतया जनितमन्मथोन्माथा निर्जगाम प्रावृट् । त्रिभुवनेऽप्येकातपत्रमिव राज्यमापादयन्ती रतिपतेर्निखिलविजिगीषुव्यव[(2)]-सायैकबीजं शरत् पुनरवततार । प्रियतमेनेव जलदसमयेन विरहितानां दिग्विलासिनीनां मलयरसे[1]नेव पाण्डिमानमानिताः[(3)] किमपि म्लानिमाजग्मुः पयोधराः । निर्म्मुक्तघन-तया कृशिमानमागतानां च तासामगलद्विविधमणिमययुगलवलयमिव शातक्र[(4)]तवं धनुः । सततमभिराममार्ग्गणमार्ग्गप्रवृत्ताः कीर्तय इव कुसुमकार्म्मुकस्य निर्जितशरच्चन्द्ररुचयो विचेरुः ककुभामुत्सङ्गेष्वम्बुजव[(5)]नोत्सुका राजहंसपङ्क्तयः । अनवरतवर्षणोत्सृष्टजलभर-प्रलघून्युत्सृज्य जलदपटलानि कलमगोपिकालोचनसम्पन्नत्विषां कुव-[(6)][F 51 A] लयानामविकलविकासकलितगौरवाण्ये[2]नुससार श्यामाभिरामतां[3] काननानि[4] । प्रतिदिवस-माज्ञेव मकरध्वजक्षितिपतेरस्खलितं[(1)] जगति विसरन्ती बभार तीव्रतां पतङ्गप्रभा । यौवनमदोपचितकेरलीकपोलस्थलशमाभिरामनभसमपहस्तिताखिलरजःप्र[(2)]सरतयाऽतिप्र-सन्नदशदिशमुल्लसत्कुवलयकुटिलालकानि[5] उन्नमयासुराननानीव[6] मधुसुरभीणि अम्बुजानि । इषुधीनिव मधु[(3)]प्रसाधितान् विकचकुव[8]लयतया मनोहारिणीं मदकलहंसकामिनी-निरुतिरमणीयां शरदमिवावलोकयितुमम्बुजिन्यः । प्रतिज[(4)]लाशयमलिवलयखण्डान् प्रवणयन्ती रतिरिवोच्छ्वसितमात्मजन्मनः प्रतिरजनि व्यजृम्भत दलितकुमुदवनलावण्य-लक्ष्मीश्चन्द्रिका । ज[(5)]लधरोन्मुक्तशशधरानना विकासिकाशकुसुमहासिन्युन्मदकलहंसनि-स्वनी[10][(6)] [F. 51. B] प्रबुद्धबन्धूकप्रसूनच्छदा विकसितेन्दीवरनयनशालिन्याश्यान-चन्दनधवलपयोधरा नव्यमृणालकोमलभुजलतोद्भासिनी प्रतनुसरित्तरङ्गत्रिव[(1)]लिवलया मञ्जुशिञ्जानसारसावलिरसनालङ्कृतशुचिसैकतविपुल[ज]घनस्थली विकचबीजकप्रसव-सुकुमारकान्तिकामिनीव कमनीया शरत् कस्य[(2)] न मनो जहार ।

अथ स यात्राक्षमं समयमालोक्य माधवो धनार्जनाय मलयविषयं प्रति प्रयातु-मियेष, अवोचच्च कुट्टन्याः पुरतः यद्—

'अयमेवास्मदी[(3)]ये धर्मो यदर्थोऽतिमहानर्ज्यते भक्ष्यते च । तदहमिदानीं मह-तोऽर्थस्यार्जनाय मलयविषयं प्रति व्रजामि' इति श्रुत्वा कुवलयावली रोदितुमारेभे । जगाद[(1)]चैनं यथा—

'त्वया विनाऽहं न शक्नोमि क्षणमपि स्थातुम्' इत्युक्तवतीं माधवस्तामभ्य-धात्—'कथं भवतीं सिंहव्याघ्रव्याकुलास्वटवीषु नेतुमुत्सहे ? तत् कियद्भिरपि[(5)]वासरैः

---

१ रसेमेव । २ °वान्यनुससार । ३ °भिरमता । ४ काननानिं । ५ °लालकारि । ६ उत्तमया° । ७ °नामीच । ८ °कुदलय । ९ निरूतिं° । १० °निस्वसा ।

रहमागच्छामि लग्नः, मा कृथाः खेदम्' इत्युक्त्वा पुनर्मुक्तमुक्ताफलस्थूलबाष्पजलकणश्रेणि-निभृतैवाधिकमरोदीत् । अवादीच्च[1]–

'त्वां विना द्वित्रा-[6] [F. 52. A]ण्यपि दिनानि न जीवितं धर्तुमुत्सहिष्ये किं पुनरियन्तं कालम्? तत् क्रियतां[2] कृपा, स्थीयताम् ।'

इत्यावर्ज्यमानोऽप्येवंविधाभिर्बह्वीभिरपि वैशिकोक्तिभिर्न[7] स्थितः । गच्छता चातिमहार्हमुत्तरीयमप्यर्पितम् । अथानु[3]व्रजन्त्यौ ते कियन्तमप्यध्वानं जग्मतुः । ततः कियत्यपि दूरे गत्वा कुट्टन्याऽभिहितम्–

'भवता विना क[1]थमियं स्थास्यति? तत् किञ्चित् स्मारणीयमर्प्यताम् ।' ततस्तेनाभिहितम्–'किमपि मत्पार्श्वे तथाभूतं स्मारणीयकं नास्ति' इत्यभिहिते कुट्टन्योक्तम्–'स्मारणीय[3]कार्थमिदं परिधानवासः समर्प्यताम् । यतस्त्वया परिहितमिति हृदये निधाय त्वामेवानुचिन्तयन्ती भवदागमनप्रत्याशया दिनान्यतिवाहयति ।'

'एवं[4] करोमि' इत्यभ्यधात्; 'किन्त्वत्र बहवः पथिकाः समागच्छन्ति तद् लज्ज्यते, तदितो मार्ग्गमुत्सृज्य समर्पयामि ।'

ततः कियति दूरे निर्जनां भूमिं गत्वा कुट्टनीमाहूय[1] पातयित्वा तस्या इतस्ततः समुद्वेल्लन्त्या– 'मातर्! मातर्! धावत धावत' इति पूत्कुर्वन्त्याश्च क्षिप्रमेव हठात् कर्णनाशिकमलुनात् । उक्तवांश्च 'यदेत-[7] [F. 52. B] त्स्मारणीयार्थं वस्त्रं त्वया याचितं तदशाश्वतमतस्तत् स्मारणीयं दीयते यथा यन्म[नो]न स्मृतिपथमुत्सृजति' इत्यभिधायात्मनः कृतार्थतां मन्यमानोऽर्थक्ष[1]तिमप्यगणयन् यथागतं जगाम ।

'तत्पुत्रि! रक्ता अपि खिद्यमाना विरज्यन्ते । तदेवंविधाः कुसुम्भरागा विरज्यन्ते अनर्थाय च भवन्ति । तस्मात् कुसुम्भरागो नियतमपीडयद्भिर्विराग[2]कारणानि रक्षयद्भिरविरज्यन्नेव विश्रावणीयः । यथा कुसुम्भरक्तं वासस्तापप्रक्षालनादिसहं न भवति एवं कु[3]सुम्भरागोऽपि ।' इत्यभिधाय [? विरतवचसि विषमशीलायां] शृङ्गारमञ्जरी पुनरप्यवोचत्–'अम्ब! वर्धते मम कुतूहलम्, तदखिलमप्युपक्षिप्तमावेदयतु[4] भवती' इत्यभिहिता सा[4] पुनरप्यब्रवीत् ।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां स्वाध्यायीमाधवकथानिका तृतीया[5] ।

---

## [ चतुर्थी सूरधर्मकथानिका ]

पुत्रि! श्रूयतां स्वप्रतिभया वित्तविज्ञानं हरिद्रारागग्रहणोपायः– अस्त्यत्र गङ्गातटे हस्तिग्रामो नाम ब्राह्मणाग्रहारः । तत्र सूरधर्मा नाम ब्राह्मणः । स[6] [F. 53 A] च पितृपितामहक्रमेणैवातिदरिद्रः कण[5]....महता क्लेशेन भोजनमप्यनवाप्नुवन्नुपरते पितरि

१ अवादी च । २ क्रयतां । ३ अथानु व्रज° । ४ °वेदयितुं । ५ विनष्टे अत्र द्वे अक्षरे ।

यौवनमाससाद। ततोऽसौ नि[1]जनगरवासिनामन्येषां विभूतीं पश्यन्नत्यन्तखिन्नश्चिन्तितवान्–'केनोपायेन ममाप्येवंविधो विभवः सम्पद्यते' इति चि[न्तय]न्निदमवधारयाञ्च[2]क्रे। अर्थैरर्था विव[र्द्ध]न्ते। ते च मम न सन्ति। अथ राजसेवां करोमि। तदुपायं न जानामि। अतः किं करोमि? भवतु भगवन्तं रत्नाकरमाराधयामीति[3] निश्चित्य भिक्षामेव भ्राम्यन्नम्भोनिधेस्तटमायासीद्। अपश्यच्च–अभ्रङ्कषकूटकोटिभिर्विजितशैलराजायतिभिर्विविधमणिवलयकान्तिभूषणैः[1] प्रसृतिडिण्डीरपिण्डपाण्डुरितमूर्तिभिः श्रीखण्डधवलै[2]....कल्लोलदण्डैरिव निवहैरुन्नतपयोधरां प्रियतमामिवाश्लिष्यन्तमन्तरिक्षलक्ष्मीं स्थाने[5] स्थाने समुल्लसद्बहलविद्रुमलताजालच्छलादेका[3] नापातुसमर्थेनोपरचितबहुशरीरेणेव वाडवेन निपीयमानसलिलम्, तीरतरु[6] [F. 53 B] मदकुक्कुभकुलक्वणितमणितरमणीयानि मन्दरमारुतान्दोलनतरलतरलां.... [1]मधुकरश्यामाभिः पत्रवल्लिभिः परिगतोपान्तानि सरसान्यापिबन्तमानन्या ....... [2]व डिण्डीरपिण्डखण्डमुद्वहन्तं कनकनिकषस्निग्धविद्याधरमिथुनाधिष्ठितानाभि.. .. ...[3]ननाप्रतिबिम्बकैः सविद्युद्दामभिर्जलधरैरिव प्रविश्यान्तरेऽपि निपी[यमान] सलिलं पल्लवितमिव ..... .......[4][ज]लधरमध्यवर्तिभिर्विद्युच्छटासहस्रैः कुसुमितमिव स्थूलमुक्ताफलजालकैः .......... [5]शशितपनमण्डलपरम्पराभिः। यत्र च तिमिङ्गिलप्रभृतिजल[चरै]................ ...[6][F. 54 A] पादयन्तो न विरमन्ति भवन्तः सकलकटकज्वलितौषधिज्वालासटालमूर्तयः सव ......[1]रालङ्कृतसपक्षाः क्षितिभृतः। यत्र च प्रातःप्रातररुणकिरणश्रे ................[2]घण्टिकाबन्धाः सम्भूय पातुमभ्यु[4]द्यताः सप्तापि वाडवावव ....................[3]तिमनुकरोति भगवान् गभस्तिमाली। यस्य चान्तःस्थलसिकतस्थूल ...............[4]त्रिदशवारणः। शुक्तिशकलं शशधरः। सलिलतुरग उच्चैश्श्रवास्तोयविद् ...........[5]णामप्यमृतत्वहेतुरम्भः पीयुषम्। त्रिभुवनस्पृहणीयसम्भोगा जलमानुष्यो ......[6][F 54 B] प्सरसोऽद्वितीया विश्वोपकारिणो याचकाः पयोमुचः। सुरासुरादिभिरपि प्रार्थनीयप्रसादलवा अपत्यं लक्ष्मीः। सकलदनुकुलध्वंसना[1]त् परित्रातलोकत्रयो जामाता पुरुषोत्तमः।

तस्यैवंविधस्याम्भोनिधेस्ततः प्रभृति स आरब्धसेवो बद्धचर्म्मचण्डातको गृहीतलकु[2]टः प्रातः प्रातरुत्थाय कुसुमाञ्जलिं भगवतः पाथोनिधेरभिमुखं प्रक्षिप्य कृतदण्डप्रणामो वेलया सहापसरति वेलया सह गच्छति। इत्थं[3] सकलमपि दिनं क्षपयित्वा सन्ध्यायामम्भोनिधेः कृतप्रणामो भिक्षयैवात्मानं निर्वाहयन् बहूनि वर्षाण्यनयत्।

अथैकदा कृतानुक[4]म्पः पाथोनिधिर्विधाय बटुवेषं तमवोचत्–'भो भट्ट! किमर्थमहर्निशं खिद्यमानस्त्वं गतागतानि करोषि?' इत्युक्तः प्रत्यभाषत–

---

१ विनष्टमत्रैकमक्षरं तच्च कोष्ठकान्त. स्थापित 'र्द्ध' इति सम्भाव्यते। २ विनष्टान्यत्र त्रिचत्वार्यक्षराणि। ३ विनष्टे अत्र द्वे अक्षरे। ‡ ५४ अङ्काङ्कितस्य पत्रस्य पूर्वार्द्धभाग एव प्राप्तः। ४ °मभ्युद्यताः।

'बटो! किं(') तवानया चिन्तया? व्रज यथाभिमतम्' इत्युक्तेनापि बटुना पुनः पुनः अनुब-(')[F. 55. A] ध्यमानोऽसाविदमवोचत्—

'निजकुलाचारेणैव पुरुषक्रमागतेन दारिद्र्येणातिखिन्नः समुद्रसेवां करोमि।' ततस्तस्य निश्चयदार्ढ्यमा(1)कलय्य बटुने[1]दमभ्यधायि—

'अहमेव स पाथोनिधिस्त्वत्सेवानुरोधादायातः। तद् गृह्यतामिदमनर्घ्यं महारत्नम्' इत्यभिधाय तदस्मै प्रायच्छत्(')। तदवाप्य कृतकृत्यतामात्मनो मन्यमानः सूरधर्मा स्वगृहान् प्रति प्रतस्थे। अचिन्तयच्च—'कथमेतन्मया मार्गे रक्षितव्यम्?' अथ परिकल्पिताभ्यु(')पायः स्वजङ्घां विपाट्य, तन्मध्ये प्रक्षिप्य, विधाय च व्रणरोपणम्, अङ्गीकृत्योन्मत्तकवेषम्, रथ्याकर्पटानि परिदधन्, निर्म्माल्यस्रजो मूर्ध्नि बध्नन्, ऊर्ध्व[2] ए(')व भुञ्जानो, यत्र तत्र स्वपन्, मलकलङ्किततनुः केवलमिदमेव व्याजहार—'अव्वा जाणइ।' लोकैरालपितोऽपि पृष्टोऽपि ताडितोऽपि[3] 'अव्वा(')जानाति' इत्येवाभ्यधत्त। एवमसौ पथि व्रजन् कियद्भिरहोभिरुज्जयनीमवापत्। तस्याश्च किं वर्ण्यते(') [F 55. B] यत्र त्रिभुवनपतिरपि विलास[4](?) लोभेन रामणीयकहृतहृदयः कैलासवासमुत्सृज्य श्रीमहाकालनाथः प्रतिवसति। तां निज[भुज]युगलविदलिता(1)रिविक्रमस्त्रिविक्रम इव विहितबलिबन्धनो विक्रमार्कनृपतिः पालयति स्म। तस्य च नृपतेः सकलजनमनो[5]दारिका देवदत्ता नाम दारिका(')ऽऽसीत्। सा चातिमहाविभवाऽतिप्रख्याता च। रूपलावण्ययौवनवैदग्ध्यविभ्रमाणामेकभवनम्। सर्वदैव कोऽभिगम्यः को महाधन इत्यन्विष्यन्ती(') देवयात्राच्छलेन परिभ्रमति। एकदा तु पञ्चषैः पदातिशतैः परिवृताऽतिविज्ञप्रभृतदासीपरिवाराऽश्वतरीमारूढा तमुन्मत्तकमपश्यत्। दृष्ट्वा च(4) तस्य च्छायां विमृश्य चेति निश्चितवती यदस्य पार्श्वे वस्तु तिष्ठति तस्य त्रिभुवनमपि स्वल्पं मूल्यम्। न च स्वभावादुन्मत्तः, किन्तु धूर्तोऽयं केनापि हेतु(')नोन्मत्तकवेषमादाय विचरति' इति विचिन्त्य तमाबभाषे—'भद्र! कुत आगम्यते, क्व गन्तव्यम्?' इत्यादि बहुपृष्टः 'अव्वा जाणइ' एतदेव सर्व-(6)[F 56. A] त्रैवोत्तरं व्यतरत्। ततस्तया निजप्रज्ञाबलात् तदीयतत्त्वं सम्यग् निश्चित्यात्मनः पृष्ठतो अश्वतरीमारोप्य स निजभवनमानिन्ये। तत्र च स्वोपभोग्यपु(1)रुषोपचारैः स्नापितो भोजितो वस्त्रालङ्काराङ्गरागादिभिरलङ्कृतः। तेन च सह रतिसुखमनुबभूव। एवं यथैकमहस्तथा परिहृ[6]तवेश्या(2)वृत्त्या शिथिलितराजसेवाव्यापारया मासषट्कम[7]नीयत। स पुन[8]र्विस्मृत्यापि नान्यदुत्तरं ददाति। अपि तु प्रागुक्तमेवोत्तरं वितरति। अन्यदा(') चिन्तितमनेन 'ज्ञात्वैवाहमनया प्रारब्धः। तद् अत्युपरुद्धेन मा कदाचिदतिमोहात् सर्वस्वमपि दातव्यं

१ बटुमेद°। २ नूर्व। ३ °प्यद्धा। ४ विनाश°। ५ °मनौ°। ६ °परिहृतय°। ७ °मानीयत। ८ पुनविस्मृ°।

तस्मिन्नेव क्षणे तदीयानुरागेण सा स्फुटितहृदया सद्य एवा[1]सुभिर्व्ययुज्यत[1]। तस्याश्च वेलावित्तिकाः प्रसादवित्तिकाः परिजनश्च कृतमरणोद्यमो वर्तते' इत्याकर्ण्य शूरधर्मा व्रजन्नकस्मादवतस्थे; 'किं किं भवत्यौ भणतः?'[2]इत्यपृच्छच्च। तया तु सर्वस्मिन्[2] वृत्तान्ते 'क्वापि[3] गतः' इति कथिते, 'अहं स पापः' इत्यभिधाय कृतमरणाध्यवसायो वेगेन व्या[3]वृत्य देवदत्ताया गृहमगच्छत्। यावत् तत्र याति तावदेकतः श्रीखण्डखण्डान्यन्यतो विचित्रवासांसि, अन्यतो घृतघटान् पश्यन्, परिजनाक्रन्दमाकर्ण[1] यन् दूरादेव मकरदंष्ट्रया दृष्टोऽभ्यधीयत—'रे रे महापातकिन्! क्व पुनरप्यागतोऽसि? तां सर्वस्वभूतां जीवितभूतां विश्व[5]-[F. 58 A] स्यापि निखिलस्य रत्नभूतां मम दुहितरं व्यापाद्य पुनरन्यत् किञ्चित् कर्तु[4]मागतोऽसि? इदानीं कस्य प्रसादादियत् कुटुम्बं जीविष्यति? अहं च कथं भवि[1]-ष्यामि? सर्वस्यापि कुटुम्बस्य भवता मुखं प्रोञ्छितम्' इत्यभिहितः स यावत् पश्यति तावद् देवदत्तां विहितप्रेतासनां मृतामपश्यत्।

ततस्तेन सा[2]क्षेपमभिहितम्—'मातः! किमिति पूत्करोषि? दुर्धरो विधिविपाकः। वृत्तेः किं पूत्कृतेन? भवतु, त्वद्भाग्यैरीदृग् व्यतिकरः सञ्जातः। नाहमस्याः परोक्षे[3]-जीवितु[5]मुत्सहे' इति कृतमरणाध्यवसायः स्वजङ्घां विपाट्य निजप्रभापटलपाटलित-दिगन्तमनुपमं समर्घ्यं च रत्नमस्यै प्रायच्छत्। उक्तवां[4]श्च—'एतत्प्राप्त्या भवत्या त्वत्कुटुम्बेन दारिद्र्यस्य जलाञ्जलिर्दत्तः।'

ततः कुट्टन्या स्वभाषयेदमभ्यधायि 'उत्व विअले'। एतस्मिन् मातुर्वचस्यमृतप्राये[1] [F. 58. B] कर्णविवरं प्रविष्टे देवदत्ताऽपि किञ्चिदुच्छ्वस्याङ्गमोटिका द्वित्राः प्रदायावलोकितुमारेभे। ततः प्रहर्षनिर्भरः प्रवृत्ते तुमुलः कोलाहलः। वर्धापन[1]कानि च प्रवृत्तानि। देवदत्ता प्रमारकेण नीतोत्थितश्च प्रवादः। ततस्तामुत्थाप्य कण्ठे लगित्वा मकरदंष्ट्रा निर्भर्त्सयाम्बभूव। ततः काश्चिदपि रभसा[2]त् पादयोर्लगन्ति, काश्चित् पुरतो लुठ[6]न्ति। ततः क्रमेण निवृत्ते महोत्सवे जामातरमपि मकरदंष्ट्रा निर्भ[7]र्त्स्य स्नपयित्वा परिधाप्य च तस्य द्विगुण[3]गौरवमकरोत्। देवदत्ता च स्नातानुलिप्ता गृहीतभूषणाऽनन्तरं तेन सह द्वित्रीणि दिनानि तथैवात्यवाहयत्।

अथैकदाऽर्धरात्रसमये तस्य[4] बहुविधाः प्रेमनिर्भरगोष्ठीर्विदधानस्य पूर्वोषित-संस्कारवशात् पुनरपि 'अव्वा जानाति' इति वचः समाजगाम।

ततो देवदत्तयाऽभिहितम्—'अरे किं त[5]व 'अव्वा जानाति' उताहम्?'

---

१ °युन्यता। २ °स्मिनु। ३ कोपि गतः। ४ कतुमा°। ५ जीवितुंत्सहे। ६ लुंठति। ७ निर्भत्स्य।

ततस्तेन कृताञ्जलिनाऽभ्यधायि–'न किञ्चिद् अम्बा जानाति। भवत्येव सर्वं जानाति।' ततो देवदत्तया प्रत्य[6][F.59.A]वादि–

'यद्यहं जानामि तदा निर्ग्गच्छ! निर्ग्गच्छ!' इत्यभिधाय पार्ष्णिप्रहारं दत्त्वा निर्धाटितः।

तेन च निर्ग्गच्छता सदैन्यमभिहितम्–'शम्बलं मे किञ्चिदीयताम्[1]' इत्यभिहिते सुवर्णपलद्वयं दत्त्वा निःसारितः।

इत्थं पुत्रि! स्वप्रतिभयाऽविश्लिष्टमस्तित्वमतिगोपितमपि सम्यगाकलय्य तदीयदार्ढ्येन तमङ्गीकृ[2]त्यात्मनो वित्तपरिक्षयमप्यपरिगणय्य देवद[त्त]योपक्रान्तः। अनन्तरं हरिद्रारागतामस्य सम्यगधिगम्य क्षिप्रमेव सर्वस्वं विश्राव्य निःसारि[3]त इति हरिद्रारागः। तदित्थं पुत्रि! हरिद्रारागे पुंसि विना खेदैर्विशिष्टतरोपायैराशुविश्रावणमेव श्रेयः। यथा हि सूर्यतापादिभिर्हरिद्रा[4]रागोऽपक्षीयते एवं हरिद्रारागे पुंसि तर्जनादीनि विरागाय भवन्तीति तैर्विना हरिद्रारागो विशिष्टोपायैराशु विश्रावणीय इति[5]।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां सूरधर्मकथानिका चतुर्थी।

## [ पञ्चमी देवदत्ताकथानिका ]

अन्यच्च पुत्रि[6]! [F.59.B] यदेतदभिहितं पराशयं परिज्ञाय[य अ]नुप्रविश्य परो रञ्जनीयः, तत् श्रूयताम्–

अस्त्यत्र सकलत्रिभुवनललामभूता भूताधिनाथेन भगवता श्रीम[1]हाकालाभिधानेनाधिष्ठिता श्रीमदुज्जयनी नाम नगरी। तस्यां निजभुजार्जितचक्रवर्तिपदः पदमद्वितीयायास्त्रिभुवनविजयश्रियः श्री[2]विक्रमार्को नाम नरपतिरासीत्। तस्य दारिका देवदत्ता नाम सकलक्षितिवलयरत्नभूता जीवितमिव उच्छ्वसितमिव चैतन्यमिव प्राणा इ[3]व सर्वस्वमिव मकरध्वजस्य, भूमिः सौभाग्यस्य, आयतनं लावण्यस्य, आश्रयो यौवनस्य, स्थानं कलानाम्, वासोवेश्म विलासानाम्, निलयो[4] लीलायाः, सकलभुवनतलवर्तिरमणीयोपादानपरम्परामादाय भगवता प्रजापतिना निर्म्मिता। सा च नृपतिभिर्महासामन्तैर्व्यवहार[5][कैः][5] . चातककुलैरिव तृष्णातरलैरुद्ग्रीवैरहमहमिकया सदैव सर्वस्वदानेनापि वीक्ष्यमाण[6][F.60.A][6]...... मुखमाशाश्चक्रे।

---

१ निर्धारित°। २ दार्ढ्येन। ३ विसृष्टतरो°। ४ °यैरसुवि°। ५ विनष्टान्यत्राष्टावक्षराणि।
६ विनष्टान्यत्र ८–९ अक्षराणि।

अथ स नृपतिर्वशीकृतसकलारिमण्डलतयैकनगरमिव निखिलमपि क्षितितलं पालयन् कदा[1]चिन्मदजलासारस्नापितमेदिनीतलानाखण्डलद्विरदस्पर्धिनोऽपहसिताञ्जन-गिरिगरिम्णो गजेन्द्रा[न]नुयोधयन्, कदाचिद् विजितपवन[2]जवानाजानेयवाजिनो वाहयन्, कदाचिदनवरतधनुष्टङ्कारबधिरितदिगन्तरः खुरुल्लिकायां सायकाभ्यासमातन्वानः, कदाचिन्निज[3]युद्धावलोकनेन, कदाचिच्छास्त्रविचारेण, कदाचिच्छस्त्राभ्यासेन, कदाचिज्जलक्रीडया, कदाचिदुद्यानविहरणैः, कदाचित्प्रणयिगोष्ठीभिः, क[4]दाचित्प्रणयिनीसमागमैः, कदाचित्प्रेक्षाभिः, कदाचिन्मृगयाविनोदेन निष्कण्टकं राज्यसुखमनुभवन्नासाञ्चक्रे।

अथैकदा याममात्रायां[5]रजन्याम्, उदयभाजि विदलितकुमुदवने कुमुदिनीबान्धवे, तिमिरव्यपगमात् पुनरपि प्राप्तावलोकासु दिक्षु[6] [F. 60. B],[4]...................पित इव निवृत्तिमासादयति जीवलोके, बहलज्योत्स्नापूरनिर्भरा[1] ..............निर्भरानन्दाश्रुविसरास्विव किमपि किमपि श्च्योतन्तीषु शशिम[2]...........भवनस्य दिग्भित्तिभागेष्वभ्रङ्कषकूटकोटैः प्रा[सा]दस्योपरि दन्तवडभि[3]...............रिवारः सन्निहितया देवदत्तया संवाह्यमानचरणकमलस्त[5]... परिदा[4]........... ... . ...........छदकारि मामप्यश्लील[5][F. 61. A]........................झटिता सा प्रत्यवोचत्–[1]'............ ...दिशतु देवः' इत्याकर्ण्य साहसाङ्को नृपति[ः सु]स्मितसुधाधौतधरं वक्त्र[2]..........

मविज्ञाताभिजनं रूपलावण्ययौवनादिभिर्दूरनिर्म्मुक्तमपरिज्ञा[3]...............दीयजातिः कथं संपरिष्वज्यते, कथमालप्यते, कथमेनं प्रत्यनुरागो[4]........ ...........अपकर्षणं न क्रियते। तदेतदतिदुः[6]ष्करमपि कथं कर्तुं शक्नोति[5] [F. 61. B] भवदीयवर्गः। तं च तथा कथमप्यावर्जयति यथासावेकयैव निश[7]..........[1]प्रयच्छति। अथ देवदत्ता विधाय भ्रूभङ्गिमरुचिमिव प्रतिपादयन्ती.....................[2]तासामाचारो विचारगोचरतामासादयति। दुर्भरं हि जठरमस्य..............[3]च्छन् देवः कथं न लज्जते। जीविकेयमेतासां तत्र वश्यं यथाकथञ्चिदा..............[4]द विनोदनार्थं तु यदेवातिक्रान्तदिने वृत्तं तदेवातिमहदाश्चर्यं विज्ञा...........[5]तो गच्छामि। तावत् सिंहद्वारान्नातिदूरे ह्रस्वमणिबन्धासनश्रवणमपि..............[6][F. 62. A] लकेशकेसरत्वक्तनूरुहमतिकठिनपृथुलोरु[8]खुरपुटमनतिमां.............[1]व श्रीवृक्षदेवमणिसनाथं शशधरमिव मनोहरकलालङ्कृतं कौञ्ज..................[2]कटकान्तं जलधिमिव दक्षिणावर्तरमणीयशङ्खं नर्म्मदाप्रवाहमिव.................[3]लक्षणं ककुदमुद्वहन्तमतिसुखश्रुतिभिरुपहितकनककङ्किणीके...................[4]निर्निमेषमात्रापक्रान्तत्रिभुवनमतिजवनतयाऽऽह्वयमानमिवेत.................[5]यां भगवतीं

१ °तांजनागिरि°। २ गजैन्द्रान°। ३ क्रीडाया। ४ ६१तमस्य पत्रस्य त्रुटितत्वादिमान्येव वाक्यानि परिपठ्यन्ते। ५ विनष्टमत्रैकमक्षरम्। ६ दुःकर°। ७ ६२तमस्य पत्रस्य पूर्वभाग एव प्राप्तः। ८ °पृथुलोर्व्वसुर°।

भुवमस्पृशन्तमिव खुरपटैरस्पृष्टभूतलतया च ग..................[6][F. 62. B] मनसेव निर्म्मितसमीरेणेवोपरचितेनाश्रितमनाश्रितापरतुरङ्गमेण रंहसा भुवि स्थितमप्युज्ज्वलेन्द्रनीलश्यामलखलीनम्, विरोचमानम[1]पि रोचमानाश्रितशरीरम्, उच्चैःश्रवःसुन्दरमप्यमनुच्चैःश्रवस्तद....रम्, तार्क्ष्यमपि महाभोगम्, हिमांशुधवलमपि प्रवालकमनीयम्, शुक्तिमन्तमपि[2] श्रीपर्वतम्, शरीरवन्थमिव गन्धवाहम्, अवाप्तविग्रहमिव- मानसम्, मूर्तिमन्तं यशःपुञ्जमिव तुरगजातेः प्रणयकलहकुपितलक्ष्मीकस्य लक्ष्मीपते[3]-र्भुजशिखरमिव निर्म्मांसमाननेन खगराजलोकमिव विशङ्कटमुरसि, आरूढं पिण्डैर्न[3] जडिम्नि, लघु श्रवणयोर्न प्रमाणे, निष्ठुरं खुरेषु[4] न मुखे, गभीरमाशये न तेजसि, मसृणं रोमसु न कशाभिवाातविसहने[4]। कृपाणमिव धारासु शुद्धं तीक्ष्णं च। अज्वालिनं छायायां नयनयो[5]श्च। कुटिलं शिरोधरायां पदप्रचारे च। लघु रंहसि वेदिते च। सुरभिं श्वसिते, शुचिमाचारे, घनागममशेषविजयसम्प[6][F. 63. A] दाम्, अत्यूर्ज परावजयेषु परमहिस्थानमाकृतौ, शिशिरं निखिलक्षान्तिषु। इत्थमखिलर्तुमयममृतांशुधवलमपि कालं समरसीमन्यरातिचक्रस्य[1]विकटं वीरयुं च। विपुलं पुलायने, अतिचतुरं चतुष्के, उत्कृष्टमुपजवे, ज्येष्ठं प्रजवितायाम्, प्रथमं वीथीर्ष्वखण्डितप्रसरं मण्डलेषु, अन्तरिक्षचारितया अतिशान्तिकत[2]या च सततमुभयथाप्यस्पृष्टं रक्ते, विलासितेनोन्निद्रतगरप्रसवपाण्डुना देहप्रभापटलेन वलितां दिव्यतयाऽवनिस्पर्शभ[3]याद् वलपटप्रावृत्तामिव विधाय क्षमामध्यासमानम्, पर्याणपर्युप्तानां च विविधमणिगतानामुंपर्युपर्युल्लसन्तीभिः कान्तिभिरात्मनो विहितप्र[1]चलचित्तवितानकमिव विभाव्यमानम्, पल्ययनप्रान्तप्रोतस्थूलमुक्तामणिशरान् दिदृक्षूणां दृष्टितर्प्पणार्थममृतकणानिव धर्षन्तम्, मरकतमणि[5]मयग्रैवेयकपरिक्षिप्ततया स्फटिकशैलशिखरमिव जलदमालया वलयितुं कन्धरावन्धमुद्वहन्तम्, निसर्ग्गप्रचलाग्रिम[6] [F. 63. B] पदतयोरःस्थलस्थायि झणझणायमानकनककिङ्किणीमालिकाभिरुपगीयमानाद्भुतचरित्रमिव विभाव्यमानम्, उभयतः स्तोकस्तोकलम्बितगजे[1]न्द्रकप्रान्ततया तार्क्ष्यस्पर्धया विवृत्तपक्षमिवोपलक्ष्यमाणम्, अतिश्रुतिसुखध्वनिततया गन्धर्वराजमिव समग्रस्यापि गन्धर्वचक्रस्योपरि वर्तमानम्, जात्य[2]जाम्बूनदोपहितविविधमणिगणश्रेणिख[9]........... लिकया परिक्षिप्तम्, क्षीरोदैकदेशमिव विचित्ररत्नकान्तिलेखया परिगतम्, पश्चिमं भा[3]गमाकलयन्तम्, अवजिताहूतानेवेतरतुर[10]...........[पा]र्श्वयोः पिण्डीकृत्य परिक्षिप्तेन कनकशृङ्खलादामनियमितेन पुष्परागमणिजन्मना पा[4]दकटकयुगलेनोद्भासमानं मुहुर्मुहुः प्रच[11]......निहितायाः[12]कनकलालिकाया निर्यदनच्छकान्तिच्छलादन्तरमात(?) मात्मनस्तेजः[5]-[F. 64. A] प्रसरमिव बहिरनवरतमुद्वमन्तमसितमणि[13]...... विकग्रन्थि-

---

१ सुन्दर अप्यनुचैः° । २ °मन्त । ३ पिण्डन्न । ४ विसहणे । ५ वीखायु । ६ वीथीष्टखण्डित° । ७ °गतोनासुपर्यु° । ८ उभयत । ९ विनष्टान्यत्र ६–७ अन्यक्षराणि । १० विनष्टान्यत्र ६–७ अन्यक्षराणि । ११ विनष्टान्यत्र ६–७ अन्यक्षराणि । १२ °ताया° । १३ विनष्टान्यत्र ६–७ अन्यक्षराणि ।

निर्म्मितारुणमणिस्तबकालङ्कृतवदनतया प्रजापतिना मुद्रितमिवोच्छृङ्खलं[(1)] तेजः सर्व्वस्वमिव विधायन्तम्, पुरुषोत्तम वा[१] ......हिता स्ववेषमिव वैनतेयमेकमास्पदम्, रूपश्रियो निवासभवनम्, सौन्दर्यस्य कुलगृहम्[(2)], शीलस्यायतनम्, तेजस्वितायाः जीवितम्, जव[२]......सापटलबहलितज्योत्स्नापूरम्, आजानेयम्, अतिमहाप्रमाणम्, आत्मरूपोपहसितोच्चैःश्र[(3)]वसमेकमश्वमपश्य[म्]। दृष्टमात्रेऽपि तस्मिन्निदमहमचिन्तयम्—'सर्वरत्नानामायतनमिदं राजकुलमेतस्मिन्नपि सर्वाद्भुतभाजि राजकुले म[(4)]येदृगश्वरत्नमवलोकितम्।' यावच्च सकौतुकमवलोकयामि तावत्तत्पृष्ठमारूढमतिरूपयौवनशालिनमेकं[(5)] [F.64. B]पुरुषमद्राक्षम्। स[३]......... ते पाश्चात्यासने स समुपाविशत्। ततोऽहमचिन्तयम्—'नूनमयं मामेवाकारयितुमायातः।' ततोऽहमखि[(1)]लमपि निजप[४].........प्य झगिति तुरङ्गममारूढवती। ततः स तेन प्रेरितस्तुरङ्गमो ज्योत्स्नाप्रसरविसरे[५] विहायसि ग[(2)]न्तुं प्रववृते। अथ[६]........ नजवतया न जाने तेन कियद्दूरमहमपवाहिता। यावत् कियन्तमप्यध्वानं गच्छामि तावदप्रभाता[(3)]यामपि रज[न्यां][७].........त्यभापत। उदित इव भास्करो व्यभाव्यत। यथा यथा तदभिमुखं नीयमानाया अपि मे न तापप्र[(4)]तिपत्तिरासीत्[८].........तः तथा तथा सुतरां ममावर्धत कुतूहलमुल्ललास च विस्मयातिशयः। यावत्सन्निहिता भवामि[(5)] तावज्जात्यकां[९].........दृष्टपूर्वमश्रुतचरमनेकमणिकिरणनिकुरम्बकरम्बितं वरतया अभित्तिचित्रकर्म्मेव निर्म्मापयन्[(6)] [F. 65. A]एक सुरधनुः[१०]...धरस्पर्धयेव धरापीठेऽप्यनेकान्याखण्डलधनुर्दण्डाडम्बराण्यारचयन्, स्फटिकोपलघटिताण्डक[(1)]तयैकचन्द्रमण्डलं[११].........नेकचन्द्रसहस्राभरणामिव भुवं विदधानम्, उत्तुङ्गतया निखिलकाञ्चनमयतया च मेरुमिव प्रत्य[(2)]क्षीकुर्वाणां वि[१२]... ......न्वितं परितः समुत्सृतानेकधवलध्वजपटतया हसदिव चन्द्रातपम्, कृष्णागुरुधूपधूमनालैर्वियत्याव[(3)]द्धजलजलधर[१३]......कर्पूरक्षोदपूरैरुपचितंशरदभ्रमिव स्फुटत्पारिजातमञ्जरीपरिमललोभादुपरिभ्रम[(4)]द्भ्रमरतया चन्द्रा[१४]........ रमिवोपलक्ष्यमाणम्, विसारिविविधमणिकिरणराजिरज्जुभिः समन्तादाबध्येव स्थिरीकृतम्, भू[(5)]मिनिहितं विम[१५]...... दीयद्वारदेशपर्यन्तमासाद्य स तुरगः क्षितावचततार। अवतीर्णे च तस्मिन् स पुरुषस्तुरङ्गं समर्प्य दारपा[(6)] [F. 65. B][१६]............कक्रोशपरिमाणे स्फटिकशिलासोपानवीथिकयाऽऽरुह्य, क्वचित् क्वचिदरुणमणिशि[(1)]............ हरिचन्दनरसविरचितस्वस्तिकम्, क्वचित् काञ्चनभूमिकासु विहितमुक्ताफलचतुष्कम्, क्व[(2)]........तम्, सर्वत्र सर्वतः

---

१ विनष्टान्यत्र ६–७ अन्यक्षराणि। २ विनष्टान्यत्र ६–७ अन्यक्षराणि। ३ विनष्टान्यत्र ९–१० अक्षराणि। ४ विनष्टान्यत्र ९–१० अक्षराणि। ५ °दिसरे। ६ विनष्टान्यत्र ९–१० अक्षराणि। ७ विनष्टान्यत्र ९–१० अक्षराणि। ८ विनष्टान्यत्र ९–१० अक्षराणि। ९ विनष्टान्यत्र ९–१०अक्षराणि। १० विनष्टान्यत्र९–१० अक्षराणि। ११ विनष्टान्यत्र ९–१० अक्षराणि। १२ विनष्टान्यत्र ९–१० अक्षराणि। १३ विनष्टान्यत्र ९–१० अक्षराणि। १४ विनष्टान्यत्र ९–१० अक्षराणि। १५ विनष्टान्यत्र ९–१० अक्षराणि। १६ ६६तमस्य पत्रस्योत्तरभाग एव प्राप्तः।

प्रविकीर्णविकचकार्तस्वराम्बुरुहरमणीयं तन्मध्यभागमालोकयन्ती महां[3]... तावत्तदेकदेशे नेत्रनिर्मितविस्तारिकाशी(सी?) नां दीर्घोष्णनि[4]श्वासग्लपितधूसराधरद[4]....कपोलार्पित-करतलतयोत्सर्पिभिर्नखमयूखैरेकश्रवणनिहितमणिभूषणामिव अ[.] ....... .. ....रिणो मुहुर्मुहुः करतलपरामृष्टाश्रुतया विगतशोणिम्नो नयनयुगलस्य प्रभया विरचित[6] [F. 66. A]........... विसरदमलदन्तकान्तिच्छलादुरसि न्यस्तैकमुक्तालतामिवातिखेद-वशात्पर्यायतः करतलकलित[1]....... .... धरदलप्रान्तस्य विस्तारिणीभिः प्रभाभिः कलितशोणमणिकङ्कणामिव कमलभ्रमा[2]... ........ लया विरचितेन्द्रनीलनूपुरामिव निराभरणमपि साभरणतयेवातिरमणीयां[3] .... .. .... .. च्छावदातवसनावृतशरीरां चन्द्रमण्डलाधिदेवतामिव ज्योत्स्नान्तरितावयवां किञ्चिदुच्छूना[1]......... अन्य-तश्चास्या नातिदूरवर्तिनं त्रिभुवनललामभूतमदृष्टपूर्वमनाख्यातचरमासना[7] ............. र्युक्तगारुत्मतरलकान्तिविसरैर्बिसरोरुभिः संवलितविपुलोरःस्थलमन्तर्दीप्यमा[8][F. 66. B] .... ...[1]यं च यथाऽस्माकं तदापृच्छामः किमपि कथ्यताम्, निर्णय[3]स्तु भव...... ..... ... वेत्रलतिकं पुरुषविशेषमवज्ञ्य.........[1]........मद्देवपादानामपि रहस्यं तेनातिरहस्येन भवितव्यम्। तदा...........संप्रधार्य प्रचलिता, स तावदत्र न सन्निवेश............[2] द्भुतमिदं यदज्ञातयाति(?)मपरिचितावििदितशि....... ममाधिकं मनसि कोपः पदम-दात्। अथ तयोर ... .[3]मपरमपरं पुरुषं कथमावर्जयति........मिदमभ्यधायि—'भद्रे देवदत्ते! त्वमतिविदग्धा प्र........[4] मस्य समर्प्यते। कथं वा ग्राम्यवृत्ति.. .....प्रणय-कलहकुपितयोर्विघटितयोर्घटना[5][F 67 A] ..... ...कादन्धतमसान्मोहादिव निःसृते ....यतभागावलम्बिभिस्तुहिनधवलैरमलमुक्ताफलदाम........[1]तास्विव प्रासादपङ्क्तिषु। व ...... मुपलक्ष्यमाणम्, स्फटिककुट्टिमतलप्रतिबिम्बितैरुप........[2]अमृतकरकिरण-कूर्चकैरिव धवलितेषु भुवन....... लिभङ्गिकाभिर्विरच्यमानकमलशयनीयम्[8]....... ... रूढो भट्टमातृगुप्तप्रभृतिः कतिपयातिविदग्धप्रणयि.... . .तः सविमानपर्यन्तममलमुक्ता-फला........[4] सलगोष्ठीः कुर्वाणस्तामावभाषे—'देवदत्ते! जन्मनः प्रभृति मद........ ... युक्तं विरहमिव मूर्तिमन्त........[5][F. 67. B] यथा भवति तथा त्वया विधातव्यमित्य-भिधाय विरतवचसि तस्यामासादितावसरः सोऽप्यवादीत्—'भद्रे देवदत्ते! त्वमेवामुमर्थं घटयितुं समर्था[1]सीति। अतो महत्याशयाऽस्माभिरा[ना]यिता।' ततः स मया समुत्पन्नद्विगुणतरकोपयाऽभ्यधायि—'किमहं स्त्री न भवाम्युत त्वदीया दासी येन त्वदीयं दूत्यं[2] करोमि?' इत्यभिहिते, तेन साधिक्षेपमहं पुरः प्रक्षिप्तां वेत्रलतामादाय-ताडिताऽस्मि। तत्प्रहारवेदनाकुलितया च मया "त्रिभुवनविजयिनो[3]विक्रमादित्य-देवस्य चरणौ मम शरणम्" इति मुहुर्मुहुरभ्यधायि। ततो नूनमनया स्मृतमात्रोऽपि

१° रारुतिः। २ ६७तमस्य पत्रस्य त्रुटितत्वादिमान्येव वाक्यानि पठितुं शक्यानि। ३ निर्णय°। ४ स्पटिक। ५ मुहुर्मरभ्य°।

परागत इति मन्यमानानां तेषां महाक्षोभः समभ[1]वत्। अहं पुनस्तैस्तत्रैव क्षिप्ता तान् पलायमानानत्याकुलान् व्यलोकम्। ततो वाह्यालीप्रदेशे पतितमात्मानमद्राक्षम्। इत्थ-मयमद्यैव रात्रौ वृत्तान्तः संवृत्तः' इत्युक्ते तया तां नृपतिरवोचत्—

'किं देवदत्ते! सत्यमेतत्?' इत्यभि[2][F. 68. A] हितया देवदत्तया पुनरप्य-वादि—'यद्यसत्यं तदाज्ञा मे देवकीया।' पुनरपि तां नृपतिरवोचत्—'किं सत्यमे-तत्?'[3] 'यद्यसत्यं तदा देवकीयाज्ञया शप्ताऽस्मि। यदैव देवस्य मया नाम गृहीतं तदैव तेषां पलायमानानां यः संभ्रमोऽभूत् कथं वचसा[3]प्रतिपादयितुं शक्यते? "परागतो विक्रमादित्यः, परागतो विक्रमादित्य" इति तेषां वाच एव मया श्रुताः, विमानं तु सम्भ्र-मात् प्रपलाय्य क्व गतमिति[2] नाज्ञायि'।' अथ पुनरपि विस्मया[3]न्नृपतिस्तामवोचत्—'किं देवदत्ते! सत्यमेतत्?' देवदत्ता तत्कालोत्पन्नसम्भ्रमविस्मयेवाब्रवीत्—'देव! सत्य-मेतत्,[4]देवस्य पुरतः किमसत्यं विज्ञाप्यते?' ततः साहसाङ्कनृपतिना परितुष्टेनाभ्यधायि—'रे रे महामात्राः! पञ्चहस्तिनं परित्यज्य यो[5]ऽयं मम द्वितीयो[5] द्विरदराजः स देवदत्तायाः समर्प्यताम्, काञ्चनकोटीश्चैतस्यै दीयताम्, क्षिप्रमेव महार्हाण्याभरणानि वासांसि च वितीर्यताम्।' ततः सविनयं[6] [F. 68. B] देवदत्तयेदमभ्यधायि—'देव! विज्ञा-पयामि मञ्चकस्य बहिरयमेकः। मञ्च[6]कस्थे पुनर्द्वितयमपि गृह्णामि। प्रागेवं देवेन पृष्टं यत् 'कथं भवदीया जाति[7]र्गृह्णाति?' 'अस्मदीया जातिर्गृह्णाति' इति सस्मितमभिधाय व्यरंसीत्। विक्रमार्कोऽप्येतदाकर्ण्य समुपजाताधिकप्रसादोऽभ्यधात्—'साधु देवदत्ते! सा[8]ध्विति। मनोहरया भङ्ग्या वयं प्रतिबोधिताः। परां प्रतिष्ठामारोपितश्च स्वजात्याचारः' इत्यभिधाय द्विगुणतरेण पारितोषिकेण तामयोजयत्।[8]

तत् पुत्रि! यो हि यदाशयस्तत् तेनानुप्रविश्य विश्रावयतां निश्चितैवार्थसिद्धिः। स हि महानुभावः प्रभावस्थापनया तन्नास्ति यन्न वितरतीति[9]।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां देवदत्ताकथानिका पञ्चमी।

---

## [ षष्ठी लावण्यसुन्दरीकथानिका ]

अन्यच्च पुत्रि! म[10][F. 69. A]हासत्त्वं महासाहसिकं सम्यगुपलभ्य आत्मत्यागेना-प्यर्थं साधयतां न दुरापाः स्वार्थसिद्धय इति यत् पूर्वमुक्तं तदपि ते कथयामि—

---

१ °याज्ञा या। २ न ज्ञायि। ३ विस्मृयान्नृ°। ४ योय। ५ °कोटिश्चत°। ६ मंएकस्थे। ७ जाति गृ°। ८ जाति गृ°। ९ विचरतीति। १० महसत्वं।

अस्त्यत्र भुवनत[1]लप्रसिद्धमतिविभववणिग्व्यवहरकवच्च(?)प्रभृतिभिर्महाजनैरधिष्ठितम् अहिच्छत्रं नाम नगरम् । तत्र च वज्रमुकुटो नाम राजा पितृक्रमागतामात्य[2]भुजावष्टम्भेनापहस्तितसमीपसामन्तचक्रः[4] क्रमेणैवाक्रान्तसकलदृप्तारातिबलः प्रबलपरिवारपरिवृतो राज्यमनुपालयंस्तदीयसुखा[5]न्यनुभवंश्च सुचिरमासाञ्चक्रे । तत्र च पितृक्रमेणैव सञ्चितविशिष्टार्थतयाऽतिमहाधनस्तैलिको घुडाभिधानः प्रतिवसति स । तस्य चाति[1]रूपयौवनसम्पन्ना मदनस्य क्रीडापुत्रिकेव यौवनस्याभरणं लावण्यस्यापि लावण्यं भार्या लावण्यसुन्दरी नामासीत् । तस्यास्तु न केवलं[5][F. 69. B]स्वजातिविलक्षणमेव रूपमितरसमस्तनारीनिकुरम्बविडम्बि सकलजनविस्मयैकायतनं च । अथ तस्य तया सह[1]रतिसुखमनुभवतः सुखेनातिक्रामन्ति वासराः । अथैकदा भ्रमणिकया निर्गतस्य तस्य नरपतेः सा निजभवनवर्तिनी दृक्पथमवततार । तां दृ[2]ष्ट्वा विस्मित इव स्तम्भित इव मूढ इव गाढमन्मथशरप्रहारविवशः कथं कथमपि स्वगृहमयासीत् । अभूच्चास्य मनसि—'कथमियं प्राप्यते ? यदि ने[3]नां प्राप्नोमि तदा नियतमहं जीवितुमपि नोत्सहे ।' ततः सा चारपुरुषेभ्यस्तैलिकघुडाकभार्येयमित्यज्ञासीत् । ज्ञात्वा चाचिन्तयत् यद्—'एनां[4]केनोपायेनात्मसात् करोमि ।' ततस्तं कमपि रससङ्करकरणादिदूषणव्याजमुत्पाद्य विधारितवान् । प्रतिपाद्यमानदण्डेन तेन द्रव्यलक्षाण्यपि[5]दीयमानानि न प्रत्यपद्यत प्रत्युत विविधाभिः पीडाभिः कदर्थितवानेवैनम् । ततो लावण्यसुन्दर्या तदीयाशयं सम्यगुपलभ्य स निजपतिरिद-[6][F. 70. A]मभ्यधायि—'यं कमपि दण्डमेष नरपतिर्याचते तमपि प्रतिपद्य त्वया यथा कथञ्चिदात्मा मोचयितव्यः ।' ततस्तेन नरपतिरभ्यधायि—'यदि द्रम्मसु[1]वर्णादिकं देवो दीयमानमपि न गृह्णाति तदाऽऽदिशतु किमन्यद् दीयताम्, यदादिशति देवस्तमवश्यं प्रयच्छाम्येव ।' ततो राज्ञा 'क्व किलास्यैतद् भ[2]विष्यति' इति मन्यमानेन विवक्षितद्विरदशतमसावयाच्यत । तत् श्रुत्वा तैलिकस्य महाक्षोभः समजनि—'अहो क्वास्मदीया जातिः, क्व करिणः ? त[3]त् सर्वथा हतोऽहं नष्टोऽहम् । का मे गतिः । किं शरणम् ?' इति चिन्ताशतसन्तानव्याकुलितचित्तो यावदास्ते तावद् लावण्यसुन्दर्या 'किं राज्ञा दण्डे याचितस्त्व[4]म् ?' इत्यपृच्छ्यत । ततोऽत्यन्तक्षुभितेनानेन कथितम्—'यदहं करिशतमनेन याचितस्तत् सर्वथा विनाश एवोपस्थितो ममायम्, कुतो मे बन्धमोक्षः ।' तत[5]स्तयाभिहितम्—'प्रतिपद्यस्व करिशतमहं ते दास्यामि ।' ततस्तैलिकेन तथेति प्रतिपन्ने राज्ञा चिन्तितम्—'ममेयं[6][F. 70. B]सर्वथा पर्यवशिता कुतोऽस्य करिशतम्' इति विचिन्त्याभिहितम्—'कियता कालेन करिशतं प्रदास्यसि ?' ततस्तया शिक्षितेन तैलिकेन मासषट्कं या[7]चितः । राज्ञा तथेति प्रतिपन्नम् । ततस्तैलिकेन साऽभिहिता—'किमिति भवत्याऽ-

---

१ महानगरवि° । २ गतमातृभुजा° । ३ °पहस्तिनसमीप । ४ °चक्र । ५ प्रतिपद्यत ।

हमश्रद्धेयसेवंरूपं दण्डमङ्गीकारितः ?' ततोऽनयाऽभ्यधायि—'अयं[(2)]राजा मामनुरक्तो व्याजेन स्वीकर्तुमिच्छति तदस्येयं दुराशा। ममैष पिता भवति। तद् यदहं भणामि तद् भवता कर्तव्यम्। अहं निर्दिष्टे काले करि[(3)]शतमवश्यं प्रापयाम्येव' इत्यभिहितस्तथेति प्रतिपन्नवान्। तया त्वभिहितम्—'न मदीयं चरितं भवता पुरतो विचारणीयम्' इत्यभिधाय विशि[(4)]ष्टतरान् पञ्चाशदश्वानश्वतरीर्विविधालङ्कारभूषितं च परिजनमात्मनश्च[(1)]-विविधानलङ्कारान् वासांसि च[1][(1)]..........[F. 71. A][2]. ........................[(1)] साहसस्यैकसदनं साहसाङ्कनृपतिमङ्गीकृत्योज्जयनीं प्रति प्रतस्थे[(2)]। ततः सा कियद्भिर्वासरैरवापद् उज्जयनीम्। आकल्पयच्चावासमात्मनः पल्लवितविविधवीरुधि कुसुमितानोकहनिवारितातपप्रसरे शिप्राप[(3)]रिसरे। अथैषा काऽपि कुतोऽप्यतिशयितत्रिदशसुन्दरीसम्पत्तिर्वेशयुवतिरायाता इत्यात्मनः प्रवादमकारयत्। तर्ककजनस्य च यथोचितं[(4)]दानमदात्। दिनमप्यशेषं विलासैरत्यवाहयत्। अहमहमिकया आगतानामपि सामन्तप्रभृतीनां 'भवतु, यद्भविष्यति तत् करिष्यामि' इत्याशामा[(5)]त्रमेवादर्शयत्। न तु कदाचित् कस्यापि ग्रहणकादानमकरोत्। प्रयातेष्वथ कतिपयेष्वहःसु स प्रवादः साहसाङ्कनृपतेः कर्णगोचरमगा[(6)][F. 71. B]त्। ततः स कुतूहलाकलितहृदयो नरपतिस्तं प्रवादमस्याः सत्यापयितुं चारपुरुषान् प्राहिणोत्। तैश्च 'सत्योऽयं प्रवाद' इत्यावेदिते स नृपतिर्विधाय मृ[(1)]गयाव्याजं तदावाससविधेन प्रतस्थे। सा तु विरचिताऽपूर्ववेषा गच्छतो नरपतेः सविलासमात्मानमदर्शयत्। स तु तां दृष्ट्वैव जातानुरागः कथं कथम[(2)]पि निर्वृत्य मृगयां तेनैव पथा स्वभवनमयासीत्। गत्वा च स्मरशरनिकरनिर्मथितमानसो मुखरकनामानमतिविदग्धस्निग्धमवार्जकं[3][(4)][4]दूतं प्रहितवान्। स विहितदर्शनः क्षणमिव स्थित्वा विधाय विविधगोष्ठीस्तां सप्रश्रयमवोचत्—'इतो मृगया निवृत्तेन[5]...................[(4)]तः कस्येयं केयमिति विज्ञातुमादिष्टोऽस्मि। तत्कथयतु भवती[6]....................[(5)] न्यामसमसाहसो युवा विक्रमैकरसिककमनीयाकृतिर्विक्रमादि[त्य][7]....................[(6)]-[F. 72. A]यं च मे निश्चयो यदि मामयं नाङ्गीकरोति तदाऽस्मिन् जन्मनि ममा-[8]..........[(1)]कृतकृत्यमात्मनो मन्यमानो भुक्तवन्तः स्वैरमास्थितस्य क्षिति[9]..............[(2)]तिरचिन्तयत्—'अहो तदिदमवीरुत्कुसुममनभ्रावृष्टिरिति।' अथ मन्दायमानातपतया शनैःशनैः सि[(10)]....................[(3)] शल्यभूमिभागेषु, प्रतीचीमनुसरत्यवनीजीवितेश्वरे तापमसहमानास्विव विवृत्य पराङ्मुखीभवन्तीषु पादपच्छायासु, सरिन्निकुञ्ज[(4)][11]........तिवाह्य मध्यन्दिनतापतन्द्रि[12]मविस्तरकराग्रेसरेषु, शनैः[13]शनैः पच्यमानसस्यशालिनीः

१ विनष्टान्यत्र १२–१३ अक्षराणि। २ प्रथमा पंक्तिर्विनष्टा। ३ श्रीगधं। ४ डत। ५ विनष्टान्यत्र १५–१६ अक्षराणि। ६ विनष्टान्यत्र ३७–३८ अक्षराणि। ७ विनष्टान्यत्र ३७–३८ अक्षराणि। ८ विनष्टान्यत्र ३५–३६ अक्षराणि। ९ विनष्टान्यत्र ३५–३६ अक्षराणि। १० विनष्टान्यत्र १६–१७ अक्षराणि। ११ विनष्टान्यत्र ७–८ अक्षराणि। १२ °तंद्रीमनिस्तरस्तकराग्रे°। १३ सनैसनैः।

क्षेत्रभुवोऽनुकर्तुमितस्ततः प्रचलितेषु कोलकुलेषु, अति[5] सौहित्यान्मन्थरप्रचलितेषु रोमन्थायमानेषु गतिवशप्रचलकन्धरावद्धशब्दायमानक्षुद्रघण्टकध्वनितदत्तकर्णेषु श्रमवशात् किमपि निःसह[6][F. 72. B]लोचनेषु वनेभ्यो[2] वसतिमनुव्यावर्तमानेषु गोधनेषु, प्रविरलायातपथिकेषु[3] स्थितप्रायेषु पथिषु, विमुच्य प्रचारभूमीरुपवनकुलायपादायां[(1)] (पादपच्छायायां ?)सिसर्पिषमाणे समापतति सत्वरे पतङ्गकुले, अतिकठोरतपनतापग्लपितेष्वपराह्णपवनसम्पर्कसुखितेष्विव शैत्यमुद्व[ह]त्सु दिङ्मुखेषु, क्र[(2)]मादस्ताचलशिखरशेखरतामाजगाम तरुणताम्रचूडारुणिमसोदरं शोणिमानमुद्वहन्नरुणसारथिः[4]। लाक्षारसलोहितैस्त्रिसरत[(3)]न्तुविसरैरिव किरणनिकरैररुणमन्तरमकरोत् तन्तुवाय इव दिवसपरिणामसमयः। अन्तरान्तरोपलक्ष्यमाणबहलसन्ध्यातपच्छेदाभिर[(4)]नच्छाभिः पादपच्छायाभिरश्लिष्टाः सञ्चरद्वनदेवताचरणसङ्क्रान्तालक्तक[र]साङ्किता इव व्यराजन्तोपवनभूमयः। अस्त-[(5)] [F 73 A]गिरिशिखरवर्तिनो विकर्तनस्य प्रभाजालेन विच्छुरितानि तत्क्षणोपसीदद्विरहवेदनास्फुटितचक्रवाकमिथुनहृदयस्रुतेनासृजेव[7] शो[(1)]णिमानमानीतानि विरेजुः सलिलाशयानां सलिलानि। दलितदाडिमीकुसुमसोदरेण तरणेरंशुजालेन संवलितानि[8] कुङ्कुमरसमा[(.)]र्जितानीव प्रत्यभासन्त प्रतिसौधममलस्फटिकमणिकुट्टिमानि। तत्क्षणमुत्क्षुभ्यतो मिथुनरागसागरस्य भुवनमाक्रामन्ती वेलेव समुल्ल[(3)]लास सन्ध्या। अवर्धयच्च परस्परगुणानुस्मारकतया अत्यर्थमुत्कतामापादयन्ती दूतीव मिथुनमानसेषु द्विगुणतरमनुरागं निद्रावशविसंस्थु[(4)]लनिमीलन्नयनपुटैः स्थित्वा क्षणमुत्क्षिप्तपक्षतिभिरुद्ग्रीवमालोक्यालोक्य निर्वाग्भिरध्यास्यन्त मणिवाप्पला[(")]-[F. 73. B]

*[अत्रादर्शे ७४ अङ्काङ्कितं पत्रं विनष्टम्]*

....[9]यायातिमिरभरनिरुद्धमप्युच्छ्वसितमिव क्षणमलज्जत। गगनतलमनु च कुङ्कुमरसमार्जनोपजनितपिञ्जरत्विषोऽन्तर्विरचि[(1)] .. [10]दविशेषकस्य हूणहरिणीदृशो ललाटफलकस्य श्रियमुद्वहद्भिनिद्रकर्णिकारप्रकरगौरच्छविस्तोकोपलक्ष्यमाणलाञ्छनमु[(2)].....[11] य शशधरार्द्धम्[12]। अथ क्रमेणैवैकः कनकताडङ्क इव शतमहदिगङ्गनायाः, कुङ्कुमरसतिलकविन्दुरिव यामिनीमुखस्य, भास्वरकार्त[(3)]स्वरदर्पण इव दिग्वधूनाम्, विकचमेकं कनकपङ्कजमिव गगनसरसः, स्रस्ततिमिरांशुकैकदेशायाः कुङ्कुमोन्मृष्टः[13] प्रकट एकः कुचकलश[(4)] इव दिवः, करतलरागरञ्जितः क्रीडाकन्दुक इव रतेः, जात्यशातकुम्भसम्भवो भाविसाम्राज्याभिषेककलश इव मनोभवस्य, उल्ललास चित्तज[(5)]न्मनो जीवातुर्जी[14]वितकुमुदकाननः कुमुदिनीनाथः। ततश्च प्रसादितरामः (?) समुत्तीर्य सलिलराशिमृक्षपरिवृतसमुल्लासितकुमुदो[(6)]

---

१ कोलकुलो°। २ °वतेभ्यो। ३ प्रविरलायतत्पथि°। ४ सारथि। ५ °रुणमंधरम्°।
६ सकान्ता°। ७ °सुतेना°। ८ सवलितानि। ९ विनष्टान्यत्र ३–४ अक्षराणि।
१० विनष्टान्यत्र ३–४ अक्षराणि। ११ विनष्टान्यत्र ३–४ अक्षराणि। १२ °धरार्थम्।
१३ कुङ्कोकान्मृष्टः। १४ जीवितुज्जी°।

[F. 75 A] दलितकज्जलश्यामलानां रजनिचारिणां तमःप्रकाराणां निधनमादधन् समुल्ललास तारापतिः। अथ जनितमदनतापानि दलयन्ती कुमुदकाननानि[(1)] चक्रवाकमिथुनहृदयानि च, विघटयन्त्युत्पथप्रवर्तकमन्धकारं मानिनीमानग्रहग्रन्थिं च, क्षोभयन्त्युत्कलिकाकुलसम्बुराशिं कामिजनहृदयं च,[(2)] व्यथयन्ती करिदशनमुशलानि विरहिणां चेतांसि च, सर्वतो विवृतचञ्चुभिश्चकोरकुटुम्बकैरखिलजनलोचनपुटैश्च निपीयमाना अप्यवर्धन्त ज्यो(त्स्ना?)[(3)]... [1]विकसितां कुमुदकाननानां रजोभिरवचूर्ण्यावचूर्ण्य कामिनामुद्दीपयन् मदनदहनमवान्मन्दमन्दमान्दो[3]लितविकासोन्मुखशेफालिका[(4)] .. ...[4]प्रदोषपवनः। ततश्च 'सखि! दुर्धरो मदनः, प्रौढिमागच्छन्तो दुःसहा शशधरमरीचयः, गत्वरं यौवनम्, अनवस्थितः प्रेमानुबन्ध' इत्येवमाद[(5)] . .. [5]वर्तन्त रतिसन्धिविग्रहव्यापारचतुराणां वयस्यानां मानिनीषु सङ्घटनपटवो वचःप्रपञ्चाः। विरहिणीनां वपुषि प्रतिबिम्बितमूर्त-[(6)] [F. 75. B]यो विरहदहनाङ्कुरा इव व्यभाव्यन्त प्रथमप्रतिबोधिता भवनप्रदीपाः। अतिरागभृतहृदयाभिर्विलासिनीभिः प्रियतमेषु सन्दिष्टानि विस्मृ[(1)]त्य विस्मृत्य पुनरुपदिश्योपदिश्य प्रेपिता[6] मदनदूत्यः। शशधरप्रदीपेनाँ[7]ङ्गनाभिः[8] कनककेतकीपत्रेपु मृगमदरसेनालि[9]ख्यन्त मदनलेखाः[(2)]। पुनः पुनरालोकितप्रियतमा[ग]मनमार्ग्गाभिः सज्जान्यक्रियन्त वासभवनान्यङ्गनाभिः। वासकसज्जावेश्मवातायनेभ्यो व्यजृम्भन्त ज्वलद्विरहदहना-[(3)] नुमापकाः कालागुरुधूपधूमाः। सितदुकूलच्छन्नवपुषो घनतरघनसाररेणुच्छुरितगण्डभित्तयः प्रत्यङ्गमामुक्तमुक्तामणिविभूषणाः सर[(4)]समलयरजसोपसिक्तनिखिलाङ्गलतिकाः प्रविकसितमालतीकुसुमदामश्लिष्टकेशपाशश्रियो ज्योत्स्नाधिदेवता इव सर्वतो[10]ऽभि[(5)]-[F. 76. A] सस्रुरभिसारिकाः। अमृतरससेकाप्यायितमिव, क्षीरोदपूरप्लावितमिव, स्फटिकमणिघटितमिव, सद्योमार्जितद्रमिडकामिनीदन्तका[(1)]न्तिनिर्म्मितमिव, गर्भताडीदलविरचितमिव, रजतरससिक्तमिव, द्विरददशनोत्कीर्णमिव, मिथुनमानसेपु निक्षिप्येव निजरागमम्बरत-[(2)] लमारोहति नैर्मल्यमागते शनैः शनैर्धवलितहरिति हरिणलाञ्छने चन्द्रलोकश्रियमुवाह निखिलमपि भुवनतलम्।

अथ म[(3)]हीपतिर्मुखरकं तामानेतुं प्राहिणोत्। साऽपि कर्षकजनतेवोद्ग्रीवा तस्यास्युन्नतस्य जलमुच इव मार्ग्गमन्वीक्ष्यमाणा तमायान्तं[11]मपश्यत्[(4)]। आगत्य च कथितपार्थिवाङ्गीकारा निर्भरं प्रमोदमभजत्। त्वरिततरमाजगाम च महीपतेर्भवनम्। अथागतया लावण्यसुन्दर्या[(5)] [F. 76. B]सह नृपतिरनुरागनिर्भरस्तस्यां रजन्यां सुरतसुखमनुबभूव। प्रातश्च विहिताह्निको निर्वर्तितभोजनादिक्रियः सुखमासीनः प्रहृष्टः सकलमपि तद्[(1)] वृत्तान्तं भट्टमातृगुप्तायाचचक्षे।

---

१ विनष्टानि ३-४ अक्षराणि। २ °मुदीपयन्। ३ °मन्दमन्दमन्दोलित°। ४ विनष्टान्यत्र ३-४ अक्षराणि। ५ विनष्टान्यत्र ३-४ अक्षराणि। ६ प्रैक्षत। ७ प्रदीपिना°। ८ °नाभि कनक°। ९ °लिख्यन्मदन°। १० सर्व्वतो। ११ तमायान्मप°।

तदाकर्ण्य भट्टमातृगुप्तस्तमवोचत्–'देव ! एवंविधा नानाप्रकारा[1]: क्षितितले विचरन्ति स्वार्थतत्पराः स्त्रियः । तद् एवंविधासु न[2] विश्वसितव्यं देवेन । इदं त्वेतदीयं सर्वमपि वैशिकमिति मया ज्ञातमेव' इति भट्टमातृगुप्तेनोक्ते स चिन्तितवान्–'किमहं निसर्गानुरागमुत वै[3]शिकमित्यपि न वेद्मि ? भवतु, किमनेन ? भट्टमातृगुप्तो गौरवित इति न किमप्युच्यते । ईदृशमेवास्य स्वरूपम्' इति तमवगणय्य तया सहानु[4]दिवसं परं विश्रम्भेण बहूनि दिवसान्यासाञ्चक्रे । भट्टमातृगुप्तस्तु प्रागुक्तमेव स्ववचः पुनः पुनस्तं स्मारयति स्म । ततः स कदाचित् स्मारयन्नभि[5]हितो राज्ञा–'कथं पुनर्निसर्गानुरागो ज्ञायते ? यथा यथाहमेतामतिनैपुण्येन परीक्षे तथा तथैषा क्वचिद्-[6][F. 77 A] पि नाङ्गं रक्षति । अनुरागचिह्नानि च सकलान्यप्यस्या दृश्यन्ते । स्वप्न(प्र?)मदान्यचित्ततादिष्वपि नास्याः किमपि वै[1]कृतं लक्ष्यते' इत्युक्ते भट्टमातृगुप्तः पुनरप्यवनीपतिमवादीत्–'देव! तर्हि देवेनेयं ग्राम्याभिर्विडम्बनाभिः परीक्ष्यताम् ।' यथा यथैष परीक्षा[2]र्थं तास्ता ग्राम्या अपि नखदशनदानकेशच्छेदादिका विडम्बनाः करोति तथा तथैषा विशेषतो हृष्यत्यनुरागिणी च भवति । तदखिलम[3]पि भट्टमातृगुप्तायाकथयत् । 'भवान् मुहुर्मुहुर्वैशिकं वैशिकमिति पूत्करोति न च वैशिकानुकारि चेष्टितमस्याः किमप्यभिलक्ष्यते ।' इत्यु[1]क्ते भट्टमातृगुप्तः पुनरप्येवमाह– 'अतिधूर्त्तेयं [अन]या देवस्याप्येवंविधश्चित्तभ्रमो जनितः । साम्प्रतं मया निर्णीतमेतत् सर्वमस्या वैशिकमिति ।' सा तु सकलमपि भट्टमातृगुप्तेनोक्तं जनपरम्परया शृण्वती सदैवाशङ्कमाना तमप्यतिगौरवेण पश्यति । अथैकदा सा व्यचिन्तयत्[6][F. 77. B]–'बहूनि दिनानि वर्तन्ते, अतिक्रमिष्यति च समयः' इति विचिन्त्य, यत्र भट्टमातृगुप्त-विक्रमार्कौ गोष्ठ्या तिष्ठतः, तत्रागत्य क्षणमुपविश्येदमभिहित[1]वती– 'अयं भवदीयप्रसादवित्तको यदहमतिदूराद् भवद्गुणानुरागेणागता तदयं वैशिकं वैशिकमिति ब्रूते, तद्भवतु मदीयानुरागस्यायमेव[2] विचार उचितः । साधुर्भवान् राजा, प्रसादवित्तकश्चायमिति मिलितं पेटकम् ।' ततोऽभ्यधायि राज्ञा–'केनेयं भवत्या व्यलीका वार्ता कथिता ? किं भट्टमातृ[3]गुप्त एवंविध उताहम् ।' इत्युक्ते सा विहस्य क्षणमेकं स्थित्वा शयनागारस्यान्तः प्रविश्य शयनीयस्योपरि निहितां राजशस्त्रिकामादाय स्वशिरश्छे[4]दमकार्षीत् । ततो यावत् शङ्कितचित्तो विक्रमार्कोऽन्तःप्रविशति तावत्तां छिन्नशिरसमपश्यत् । ततस्तामालोक्य कुलिशेनैवाहतः, ज्वलनेनेवा[5]लीढः, दृष्टिविषविषधरेणेवेक्षितः क्षणमभूत् । अनन्तरं हृदि विचिन्त्य भट्टमातृगुप्तमाहूयेदमभिहितवान्– 'भट्टमातृगुप्त ! दृष्टं भवता वैशिकस्या-[6][F.78. A] वसानम् ?' इत्युक्ते सोऽब्रवीत्– 'देव दृष्टं, किमन्यथाऽहं ब्रवीमि ? इदमपि वैशिकमेव ।'

---

१ °कारा क्षिति° । २ लक्षत ।

ततोऽतिकुपितः स सहसातृगुप्तमवज्ञाय तां तथाभूतामनुचरैरुत्क्षेप्य[1] भगवत्या आशापुराया आयतनमगात्। तत्र च निखिलमपि परिजनं बहिर्निस्सार्य विक्रमादित्योऽपि स्वशिरश्छेत्तुमुपचक्रमे। ततो भगवत्या[2]शापुरा—'पुत्र! पुत्र! मा कृथाः साहसमेवंविधम्, न भवान् सामान्यः, किमिति प्राणिमात्रानुकम्पयेतरप्राणिवदात्मानं विनाशयति' इत्यभिदधाना तं करे[3]जग्राह। स प्रत्यवादीत्— 'देवि! क्षम्यताम्। मुच्यतामयं करो यथाभिलपितमुपहारं भवत्यै प्रयच्छामि।' ततो भगवत्योक्तम् 'तुष्टाऽस्मि तवानेन सर्वाति[4]शायिना साहसेन तदुच्यतां यदभिरुचितं भवतः' इत्युक्तो विक्रमार्कस्तामाह— 'देवि! पुनरप्येषा लावण्यसुन्दरी जीवितेन संयोज्यताम्' इत्युक्ते[5]तां देवी प्रत्युदजीवयत्। ततो हृष्टमनास्तामादाय विक्रमार्कः स्वभवनमगच्छत्। सर्वतः प्रावर्तन्त वर्धापनकानि, आनन्दमाससाद च निखिलः पौर-[6][F. 78. B] लोकः। इत्थमतिहृष्टयोस्तुष्टयोः [ मदन ? ]वशङ्गतयोर्गतानि कतिचिद्दिनानि।

अथैकदा भोजनानन्तरमवसितप्राये वासरे शनैः शनैः पश्चिमाशामनुसरति[1] कमलिनीबान्धवे तया सह दन्तवडभिकामधिरूढो विक्रमार्कनृपतिः स्वैरविहारागतमसितमणिशिलासमुद्गकश्रीविडम्बिना चरणचतुष्टयेन[2]ग्रसमानमिव धरणिमण्डलम्, अत्युत्साहितया चरणतलगतानाभोगिनोऽष्टादशद्वीपानिव नखमणीनुद्वहन्तम्, निसर्गत एव रूपश्रियो विलासभ[3]वनेन सुप्रतिष्ठितोपचितस्थिरस्निग्धत्विषा गात्रापरेणोद्भासमानम्, शौर्यलक्ष्मीनिवासैकवेश्मनो हृदयस्य कवाटाभ्यामिव दृढसुघटिताभ्या[4]मंसकलकाभ्यामुपशोभमानम्, मीनविक्षोभिनाऽतिपृथुलेनाप्रधृष्यकमनीयेनाम्बुराशिनेव[5] [F. 79. A] श्रीमतोरसा विराजमानम्, अनवरतमदसुरासौरभानुपातिभिर्मधुकरकुलैरतिघनस्थगिततया निखिलकरिकुलोपमर्दकरुणया वेधसेवाय[1]त्नविरचितासितावघाटमिव वदनमुद्वहन्तम्, मधुपृषत्पिङ्गलत्विषो नयनयुगलस्य प्रसृतकान्तिजालतया निर्यदन्तच्छकोपानलज्वालमिवोप[2]लक्ष्यमाणम्, आयतस्निग्धमसृणेनाभिनवमालतीमुकुलसोदरत्विषा समदकरिकुलोन्माथजन्मनो निखिलभुवनव्यापिनः समुज्जिगमिषो[3]र्यशसः प्रथमनिर्गताङ्कुरद्वयेनेव दशनमुशलद्वन्द्वेनोद्भासमानम्, अतिपृथुलाभ्यामच्छिन्नमदनदीप्रवाहोद्गमकुलाचलाभ्यामिव कपोल[4]स्थलाभ्यामुपशोभमानम्, समेष्यन्त्या विजयश्रियो जनितवर्णकपल्लवेन पूर्णकुम्भेनेव कुम्भेन शोभमानम्, अत्या[5][F. 79. B]यतिभृतो वदनस्य विस्तृतिमिवापादयताऽतिपृथुलेन प्रतनुशोणबिन्दुचित्रितत्वक्तयाऽनेकसमरसम्मर्दक्षपितविपक्षगजरुधिरकणकर्बुरितेनेव[1] प्रचलाग्रपल्लवतयोद्दाममदसन्तापतप्ताविव कपोलौ वीजयता श्रवणद्वयेन भ्राजमानम्, अतिपृथुना क्रमापवृत्तेनातिदीर्घेण च भूतलस्थितानि[2]निखिलान्यपि नागकुलान्यन्वेष्टुमिवातिप्रचलेन लोलता करदण्डेन चण्डि-

१ °भिलखितुमुपहार।

मानमाक[ ल ]यन्तम्, सततमतिमसृणघुसृणारुणेन विजयलक्ष्मी[3]पयोधरद्वन्द्वेनेव निहितसिन्दूरशोणरोचिर्षातिविकटेन कुम्भकूटद्वयेनोद्भासमानम्, मार्ग्गत्रयप्रवृत्तैरविच्छेदिभिर्दानसलिलपूरैरेकप[4]थवाहिनीं कालिन्दीमपि त्रिपथगामिव प्रदर्शयन्तम्, अनवरतमदजलासारसौरभाश्लिष्टमूर्तितयासन्नवर्तिभिर्मधुकरैश्चारणगणैरिवोप[5]गीयमानम्, अनेकसमयविजयार्जितं यश इव श्रवणावतंसतामागतमतिविमलशङ्खप्रभापूरचारुधवलचामरयुगलमुद्वहन्तम्, गाढसन्धि[6]-[ F 80. A ]बन्धेन श्लक्ष्णसुस्निग्धत्वचातिविस्तृतेन स्कन्धेन कामपि रामणीयकश्रीकमुद्वहन्तम्, अतिविपुलासनम्, उदग्रं धनुःकुटिलपृष्ठवंशम्, अतिसुसंहतपेच[1]कमृज्वायतस्निग्धवालधिमतिरमणीयमपि भीषणमखिलजननयनहारिणा हरिणेव लक्ष्मीभृतोभयतः पुष्करद्वितयेन विराजमा[2]नम्, आघाटालमनुपदिग्धं सुषममार[3]क्षेषु त्वचः प्रकर्षमापादयन्त्या प्रतापश्रियेवाग्नेय्या छायया परिगतम्, त्वक्तनूरुहाण्डकोशगात्रापरभा[3]गेषु ह्रस्वमाननांसफलकहस्तवालधिष्वा[4]यतमुरोभागासनकटकपोलसृक्कसमदास्वतिविशालम्, पश्चिमासनवंशपेचकपक्षकुक्षिजघन[4]कलाभागेष्वतिविभक्तम्, अतिमसृणं त्वचि विलोमे च, अतिगम्भीरमाशये ध्वनिते च, अतिचतुरं गमने प्रयोगे च, अतिरमणीयं आकृता[5]वनूके च, अतिसु[5]रभिं श्वसिते मदजलामोदे च, अतिमहान्तं वपुषि सत्त्वे च, अतिरक्तं तालुनि नेत्रान्तयोश्च । जात्याकृतिशीलसत्त्वात्मकादिभिः[6][ F. 80. B ]

*[ अत्रादर्शे ८१ अङ्काङ्कितं पत्रं विनष्टम् ]*

.......दग्रहणोत्तम्भितायतकरतयानेकसमरनिर्जयाप्तां विजयपताकामिवात्मनः समुत्क्षिपन्तम्, शरत्समयमि[1]वोल्लसदिपीकम्, हेमन्तमिव परमहिमोपचितम्, शिशिरमिव जनितातिप्रकम्पम्, वसन्तमिव विलसदसमपुष्करम्, ग्रीष्ममिव क्षपिताशेषवाहि[2]नीकम्, जलदसमयमिव गम्भीरतरघनध्वानम्, एवमखिलर्तुमयमिवोपलक्ष्[6]यमाणम्, अवधीरितैरावतध्वनिप्रसरम्, अनुदिवसमम्भःक्रीडासु ख[3]ण्डितपुण्डरीकविभवम्, उद्दलितकुमुदशोभम्, अनेकशः समराङ्गणेष्ववजितसार्वभौमम्, अपहस्तिताञ्जनच्छविम्, अवगणितसुप्रतीकम्, अतिकम[4]नीयेनातिदुःसहेन च तेजसा न्यक्कृतपुष्पदन्तम्, असकृत् त्रिपदिकाविलसितेन दूरीकृतवामनोत्साहव्यतिकरम्, ए[7]वमाजिताखिलत्रिदशगजरा[5]जचक्रमिव विभाव्यमानम्, सकलजननयनहारिणीं मदावस्थामिव चतुर्थीशोभां दशां च बिभ्राणम्, अतिमनोहारिणा रूपलावण्यातिशयेन त[6]-[ F 82 A ]र्पयन्तमिवापूरयन्तमिवाप्याययन्तमिवानन्दयन्तमिव रमयन्तमिव चक्षुरिन्द्रियम्, रिपुदलनाभिधानं द्विरदराजमद्राक्षीत् ।

---

१ °सोचिषा । २ °यतस्निग्धवालधि° । ३ सुखममार° । ४ °वालधि° । ५ आकृत्वा° । ६ °लक्षमाणम् । ७ एवमजिता° ।

तं चावलोक्य प्रहृष्टमनाः क्षणं स्थि[1]त्वा लावण्यसुन्दरीमेवोचत्–'प्रिये लावण्य-सुन्दरि! याचस्व किमपि' इति। पुनः पुनः सादरमभ्यर्थ्यमानाऽप्येतदेवावोचत्–'यत् त्वदीयं तत् सर्वमपि[2] मदीयमेव च, तत् किमहमन्यद् याचे? अथ मच्चित्तमावर्जनीयं भवतः, तद् बाल्यादारभ्य मम हस्तिनामुपरि महत् कौतुकम्। अतो दीयतां ममैवंविधा[3]नां शतमेकं मतङ्गजानाम्'। राज्ञाऽभिहितम्– 'कियन्मात्रमिदम्? अन्यदपि याच्यतां यदभिरुचितम्' इत्यभिधाय हस्तिशतं प्रायच्छत्। उक्तं च तया–'सर्व[5]थेयं प्रसिद्धिर्विधीयतां यथा हस्तिशतमेकं लावण्यसुन्दर्यै वितीर्णमिति।' राज्ञा च तथैवा-नुष्ठितम्। ततो गतेषु द्वित्रेष्वहस्सु लावण्यसुन्दरी[6] विहिताञ्जलिपुटा राजानं व्यजिज्ञपत्–'देव! भवतो मोचनकमस्तु, वेश्याऽहम्। अस्मदीय ईदृश एव व्यवहारः[7]।[ F. 82. B ] ..........[4][ विक्रमा ]दित्यनृपतिर[वोच] त्–'किमेतत्? भवत्व[7]........... ....... मेतत्। ततो लावण्यसु[न्दर्या] आदितः स्ववृत्तान्तं[8]....... ........ततस्तेन सह सुख-मनुभवन् सुचिरमासाञ्चक्रे।[9] .. ... . ....... ...ति।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेव[1] [ विरचितायां शृङ्गारमञ्जरीकथायां लावण्यसुन्दरी(?) कथानिका षष्ठी ]

---

## [ सप्तमी कुट्टनीवञ्चनकथानिका ]

अन्यच्च धूर्तेभ्योऽपि प्रयत्नादात्मा रक्षणीयः तथा[1] . . ...[ F. 83 A ] ... . . चिदपि राजहंसानां जलदसमयशङ्कामपनयन्ति[1].. .. ... ..... .यत्र च निरन्त-रोच्छ्रितयूपतया वृत्तिनिरुद्ध इव[2]... . . . .अनुरक्तमनसः पश्चिमे वयसि दारकद्वितयमभूत्[3].... . ... . .व्यापितसकलक्रमेण यौवन[4]. ... .. .. .. . .. ... ... . , ... देशान्तरगमनं प्रत्यभिलाषः। ततस्तौ धन[5]...........[ F. 83. B ] दीनि लङ्घयन्तौ जग्मतुः। व्रजतोश्चानयोः कुसुममासजनितां समृद्धिमवनेरुन्मथ्नन्[5] व्यजृम्भत दारुणो घर्म्मसमयः। क्रमेण च कठोरीभव[1]द्भासि भगवति गभस्तिमालिनि, जीर्णतरुकोटरकुटी[ र ]कुलायनिलीनेष्वतिकठोरघर्म्मभिया मसृणमसृणं क्वणत्सु कुकुभ[6]कुलेषु, कठिनतरघ[2]र्म्मग्लपितबन्धनश्लथतया निपतितातिजीर्णनिखिलच्छदचयेषु, अधिकदुःसहातपनिपातातिदूयमानक्षुद्रकीटाश्रितस्कन्धत्वक्सन्धिषु मदलो[3]हितसरटसन्दं-श्यमानोल्लसितद्वित्रपल्लवेषु, रूक्षतामुद्वहत्सु क्षितिरुहेषु, दिनकरकरालातपोत्तप्तपांसुतया बहलतरकुकूलान[4]लरजःपुञ्जकचितेष्विव नखम्पचेषु वर्त्मसु, सर्वतः प्रसरतया तरुणतर[7]-

---

१ °सुन्दरी अतो°। २ बाल्यदारभ्य°। ३ °भिज्ञाय। ४ ८३तमस्य पत्रस्य त्रुटितत्वादि-मान्येव वाक्यानि पठितुं शक्यानि। ५ °रुन्मथन्। ६ कुकुभ°। ७ °तरु।

तपनतेजसां विसरेण पुष्यमानानां वनस्थलीनां पूत्कृतेष्वि[5]व बधिरितदिगन्तमुद्गच्छन्तीषु तारतरासु चीरिटीका[1]विरुतिषु, जरदजगरश्वाससन्धुक्षमाणज्वालावलीजटिलितेषु प्लुष्यमाणक्षुद्रकीट[6]-[F. 84 A]कुटुम्बकठिनत्वक्तडत्कारवाचालेषु भयचकितोड्डीयमानशकुनिकुलपक्षपालीपवनप्रेङ्खि[3]तशिखेषु, ज्वलत्सु सर्वतो दावज्वलनेषु, दीर्घत[1]रदिवसजनितगमनमार्ग्गखेदात् समुत्पन्नतर्षातिशय इव प्रौढतात्य[य]घर्म्मरश्मावापिबति सकलानपि सलिलाशयान् प्रतिदिवसमपचीय[2]मानसलिलतया तरङ्गितसैकतासु, प्रविरलजलोपशल्यसञ्चरद्बककुलावलोकनाकुलितशफरिकासु, जठरशेवालमञ्जरीपुञ्जतल[3]विश्रान्तघर्म्मग्लपितबालकमठासु, स्तोकस्तोकनीलायमानवेतसलतासु, रविकरोच्छिद्यमानतीरतरुसौन्दर्यसन्तापादिव तनिमान[4]मागच्छन्तीषु क्षितिधरनिकुञ्जस्रोतस्विनीषु, मुहुर्मुहुरीषदुत्फुल्लनासिकाविवरनिःसृतश्वासपवनैरनवरतमेकतः प्रेङ्खोलितविषा[5]णकोटिकण्डूयितदंशोपसृष्टकुक्षिभिर्मुहुर्मुहुर्मशककुलत्रासनार्थमुल्लसितलाङ्गूललतिकाच्छोटितपृष्ठभागै[6]-[F. 84. B]र्वनमहिषकुलैः कदर्थ्यमानक्षुद्रजलचरेषु, पङ्कशोषवशादन्तरन्तःप्रविशत्कीटककुटुम्बिनीसंश्रियमाणसन्धिरन्ध्रेषु, पङ्कोपदिग्धान्तः[4]प्रतनुसलि[1]लेषु कासारोदरेषु, तरुणतपनतापक्लमोपजनिततन्द्रीसुखान्तरालविहितरोमन्थेषु प्रच्छायमाश्रयत्सु मृगकदम्बकेषु, दृषन्निर्यूहच्छाया[2]निलयने[5]निभृतहुङ्कणकाहुङ्कृतैर्घर्म्मक्लमकान्तिनिःसहतया निःस्व[6]नत्स्विव क्षितिधरनिकुञ्जेषु, मनाग् विनतेष्ववनिभागेष्वतिव[3]हलरविकिरणनिपतनोद्गताभिः प्रसरन्तीभिः परितो मृगतृष्णिकाभिः प्रलोभ्यमानेषूर्द्ध्वकर्ण्णकन्धरेषु क्लमवशादीषन्मुकुलितलोचने[4]षु तर्षतरलेष्वितस्ततो धावत्सु बालहरिणकेषु, निजचापलभ्रमणखेदविधुरेष्वनिरुहस्कन्धशाखान्तरनिलयननिभृतेषु यथायथमु[5]पविष्टेष्वासीनप्रचलायितेन मध्यन्दिनतापतन्द्रीं गमयत्स्वपरेषु च निद्रा[ल]सविवशतया शिथिलाङ्गेषु प्रपतत्सु पुनरुत्पत्यारोहत्सु क-[6][F 85. A]पिकुलेषु, दलितकज्जलश्यामलेष्वतिवहलपङ्कावलेपद्विगुणितवपुःश्यामिकेषु मुहुर्मुहुर्घूर्ण्णमानकपिलारुणलोचनेष्वर्कभया[1]त् तमःसञ्चयेष्विवान्तरान्तरोल्लसितखद्योतद्युतिच्छिद्रितेषु पल्वलप्रान्तमुस्तास्तम्बगहनान्याश्रयत्सु वनवराहयूथेषु, तीव्रतरतरणि[2]करनिकरव्यतिकरादलननिर्म्मितेष्विव स्पर्शतोऽपि दत्तपथिकव्यथेषु, पक्षपुटसन्धिसञ्चारितोत्तप्तधरणिरजःकणप्लोषमीतैर्जीर्ण्ण[3]तरुकोटरेषु निलीय निलीय पतत्रिभिर्विमुच्यमानागमनमार्ग्गेषु, सहजप्रेमानुरक्तप्रेयसीपरिहरणजनितैः पथिकानामयः[4]शूलैरिव दवदहनदग्धतृणस्तम्बशकलैः किर्मीरितदिङ्मुखेषु घर्म्ममर्म्मरितोन्मूलितक्षितिरुहच्छदनिकरकरम्बिताम्बरेषु, नि[5]विडतरताडनप्रचलज्झणझणायमानोत्पाकश्यामीकृततमालबीजबीजकोशीशतसततसंवर्ग्गितचीरीचित्कारमुखरितेषु, प्रतिविपिन[6]-[F. 85. B]मुत्सङ्गिताभिर्झिल्लीकोज्झिताभिः सलिलकणिकाभिरात्मनोऽपि

---

१ चीरिका° । २ °वोड्डीयमान° । ३ प्रेङ्खित । ४ °दिग्धातः । ५ निलयना° । ६ निष्टनत्स्विव । ७ पट° । ८ °कानामयश्शोलैरिव । ९ °मर्मरतितो° । १० °श्यामकृतमालबीज° ।

दिवसकरकिरणसन्तप्तस्य शिशिरतामिवापादयत्सु, मधुसमयविरहदहनस[(1)]न्ता-
प्यद्वपुषां दिशां निःश्वासेष्विवोष्णदीर्घेषु, प्रेङ्खोलितार्जुनप्रसवमञ्जरीरजःपुञ्जसुरभि-
तेष्वभितः[1] करीषंकषेषु प्रवात्सु पवनेषु,[(2)] एकस्मिन्नहनि प्रयान्तौ तौ पूर्वापरपयोरा-
शिपर्यन्तव्यापिनीमुन्मदकरिगण्डकण्डूयमानसङ्क्रान्तदानजलसौरभभ्राम्यदलीविलासिनी-
वल[(3)]यितस्कन्धैर्वनदेवताविरचितलतान्दोलनस्रस्तशाखाकुसुमप्रकरसंवलिततलैर्मदनोन्म-
दशबरराजरमणीभिः कर्ण्णपूरार्थमनवरतमु[(4)]ल्लूयमानपल्लवैश्चटुलकपिकुलान्दोलितप्रतनुशा-
खाग्रभ्रश्यदस्तोकपाकफलरसामोदसुरभितै[2]रदयन्निधुवनक्लान्ताभिः किरातकामिनीभिः[(5)]
[F. 86. A]सततमासेव्यमानप्रच्छायैर्यौवनमदरुद्धसिद्धसुन्दरीतारतरमधुरगीतिवाचालि-
तलतावेश्मभिः कुसुमरसास्वादमाद्यन्मधुकरवधू[(1)]झङ्कारहृतपथिकहृदयैः करावचेयफल-
कुसुमजालकैरकठोरशिखिकण्ठकाण्डद्युतिसोदरं हरितिमानमुद्वहद्भिस्तरुभिरुद्भासि[(2)]ताम्,
अचकितचकोरकामिनीचञ्चुचूर्ण्यमानमरिचवल्लिपल्लवाम्, उल्लसल्लवङ्गसंवर्ग्यमाणतरुणपूग[3]-
द्रुमखण्डाम्, उड्डीनशिखण्डिमण्डलीकला[(3)]पकल्पिताखण्डलकोदण्डाकाण्डमण्डितगगन-
मण्डलाम्, अतिचटुलचातकचञ्चुपुटाचम्यमानगिरिकुहरनिर्झराम्बुविप्रुषम्, उद्दामदात्यू[(4)]-
हव्यूहकुहकुहा[4]रावोद्दीप्यमाननिधुवनविराममन्दीकृतशबरसुन्दरीसुरतकेलिव्यतिकराम्,
अतिमनोहारिहारीतविरुतहारिणीम्,[(5)][F. 86. B]कृकल[5]कुलकेलिकीर्यमाणप्रियङ्गुमञ्जरी-
रजःपुञ्ज[6]पांसुलितेष्ववनितलेष्वभिलक्ष्यमाणसञ्चरद्वनदेवताचरणमुद्राम्, अतिगहनतया[(1)]
क्वापि प्रचण्डपुण्डरीकध्वनितचकितैरितस्ततः पलायमानैर्लतागहनगुप्यद्विषाणपरम्परोद्गो-
पनपरैस्त्रासतरललोचनैः शबर[7]कुलै[(2)]राकुलितप्रदेशा[म्], क्वचिद्वनवराहयूथोत्खन्यमानद-
लितमुस्तामोदवाहिनीम्, क्व[चि]त् करिकलभकोल्लूयमानपल्लवत्रासादिव दूरोच्छ्रितशाखैः[(3)]
शाखिभिरधिष्ठिताम्, क्वचिन्निबिडतरतरुगहनतिरोहितप्रान्तैर्दूरादपि टिट्टिभारटितसूच्य-
मानैर्निकुञ्जस्रोतस्विनीमहाह्रदैरधि[(4)]ष्ठितशैलोपशल्याम्, क्वचित् सर्वतः प्रज्वलद्दावदहन-
ज्वालावलीकवलिताक्षितिरुहाखिलप्रान्तभागतया कुतोऽप्यात्मनः शरणमनवेक्ष्य[(5)]माणेन
भ्रमितकन्धरं चकितचकितमुभयतोऽप्यवकृष्यावकृष्याङ्गमतिदीनं दिक्षु चक्षुर्विक्षिपता
पश्चावनमितकर्ण्णयुगलेनातिश्लथमुक्त[(6)]-[F. 87. A.]पुच्छेन विषादात् क्षणमेकमति-
निश्चलेन मुहुर्मुहुर्निमेषोन्मेषान् विदधता शुष्यत्तालुना विदीर्ण्णवदनतया प्रकटितदशन-
पङ्क्तिनाऽतिमात्र[(1)]दीनाननेन प्रसृतधूमव्याकुलावमीलल्लोच[ने]न क्षण एवात्मानं
दग्धमिव मन्यमानेन झगिति[8] चक्षुरुन्मील्य प्रत्यङ्गमालोकयता निपतन[(2)]भयाद् गाढतर-
गृहीतशाखेन क्षोभवशविसंस्थुलीभवत्करग्रहतया किमपि भ्रष्टेन पुनरुत्पतता भयाति-
शयात् सद्योऽवसीदद्वपुषा मुहु[(3)]र्मुहुरनभिव्यक्तविहितची[9]त्कारेण उपर्युपरि प्रतिशाखा
मितस्ततः समारोहतैकाकिना जरन्मर्कटेनारुह्यमाण[10]जीर्ण्णोत्तुङ्गतरु[(4)]शिखराम्, क्वचिदुल्ल-

---

१ °भित। २ °भितैस्तैरदय°। ३ पूवाद्रुम°। ४ °कुहकुहरोवोद्दीप्य°। ५ कृकल°।
६ पुंज. पंशु°। ७ संवरकुलै°। ८ झगिति। ९ °चीत्कारेण। १० °माणं।

सद्दावदहनज्वालावलीवलयितस्थलीभागतया शनैः शनैः पुञ्जीभवत्पोतेन प्रतिदिशमतिचकितचकितमालोक्य[7] ता स्फुटत्कठोरकण्टकग्रन्थित्वचां वंशगहनानां तडित्कारिभिर्ध्व नितैर्विहितकलभकरेणुकापीत्कारेण कुण्डलितसुण्डारेखातिगम्भीर[8]-[F. 87. B]क्रण्ठगर्जितानि कुर्वता मुहुर्मुहुश्चक्रीभवता मुहुर्मुहुर्निर्गममार्गमुद्वीक्षमालोकयतोत्तम्भितकर्णयुगलेन स्तोकप्रविष्टपाश्चात्यभागेन[1] स्तब्धोल्लासितवालधिना त्रासोल्लानितविलोचनेन शनैः शनैरायान्तमुद्दामदवदहनमसहमानेन निर्गमनेच्छया प्रतिदिशं किमपि[2] किमप्यायतिभृता पुनः पुञ्जीभवता स्थित्वा क्षणं विभाव्य च दवदहनज्वालानामेकतो मान्द्यमतिविहितवेगेन कराग्रताडितभुवा रचित[3] पीनपीत्कारेण वीराग्रेसरद्विरददर्शितवर्त्मना झगिति निःसरता ईषद्दह्यमानपार्श्वद्विरदपार्श्वतया विहितविविधारटितबधिरितदिगन्तेन मन्द-[4] जवतया पश्चात्पति[त]स्तनन्धयावेक्षणप्रतिक्षणव्यग्रधेनुकेन द्विरदयूथेन झगित्याश्रियमाणातिहरिततरुच(व?)लयितोपान्तापरकच्छाम्[5], [F. 88. A] अच्छभल्लोत्खातवल्मीकशिखरमृत्तिकर्म्मारितैकदेशाम्, क्वचिन्मध्यन्दिनतरणिकिरणसन्तप्यमानतनुतयोत्पन्नखेदैरपि शनैः शनैः[1] सलिलमुपसृत्य तट एव कैश्चिन्निखातचरणैरुत्तब्धवालधिभिः प्रसारितकरदण्डैः सलिलमादातुं प्रवृत्तैः, कैश्चित् तथैवोपादायाम्भःकुण्ड[2] लितशुण्डारमुत्तानितौष्ठमीषदुन्नमितकन्धरमानननिक्षिप्तपुष्करैः पिबद्भिः, कैश्चिदपि निमज्जोन्मज्जद्भिः, अपरैस्तलावाप्तिकुतूहलिभि[3] र्बालतयात्मनो निगाधतया च पयसामनवाप्तपर्यन्तैर्विश्रुतश्रुतिशिरःशुण्डारैः साकुलमुन्मज्जद्भिः, अपरैः सलिलमादाय प्रथममासि[4] क्तकुक्षिभिरुपरि सीकरासारमुत्सृजद्भिर्घर्म्मक्लमप्रशमनार्थमात्मनो जलमयमातपत्रमिव वितन्वानैः, अपरैः सपत्रमूलमुन्मूलि-[5] [F. 88. B] तया शिरसि निक्षिप्तया कमलिन्या सन्दिह्यमानश्रवणदशनाङ्कुरैः, इतरैर्ग्रासीक्रियमाणैर्विसटसत्कारोपजनितश्रुतिसुखैः, अन्यैश्चो[1] त्क्षिप्तपुष्करमम्भसि स्तोकस्तोकमितस्ततः प्लवमानैः, अपरैश्च पीत्वा पयस्तट एव किञ्चिदवनमितजघनभागैरुत्फुल्लकुक्षिभिः स्तोकोत्तम्भि[2] तश्रवणपल्लवैरवनितलस्रस्तहस्तैरीषद्विधुतकन्धरैः श्रवणाभिमुखत्र्यश्रितैकनेत्रत्रिभागैः सावधानमाकर्णितमूत्रधाराध्वनिभिर्मूत्रीय[3] माणैः, अन्यतश्च यूथपतिभिर्मदमलिनैःकपोलस्थलैर्मज्जद्भिः, सलिलसङ्गभयात् सहेलमुन्मुक्तगण्डभित्तीनां पुनर्दानपानाभिलाषादमुक्तो[4] परितनप्रदेशानां मधुकराणां मण्डलेनाधिपत्यसंसूचकमात्मनो नीलातपत्रमिव दर्शयद्भिः, अपरैरपि स्तनन्धयैः प्लवनप्रवृत्तैरगाधतया[5] व्यावृत्य निजनिजधेनुकानां गात्रान्तरालमाश्रयद्भिः, पिबद्भिरुत्सृजद्भिस्ताडयद्भिर्मलिनयद्भिश्च करिकुलैः प्रक्षोभ्यमाणगहनसलिलाशयाम्, क्व-[6] [F. 89. A] चित् क्वचिट्टङ्कच्छिन्नगिरितटनिपातिभिरुभयतो गण्डशिलासन्ध्युद्गतस्नुहीविपिनान्तरालोद्गतैरुत्तरोत्तरा-

१ ध्वनितै॰। २ ॰मुद्दामदव॰। ३ विरा॰। ४ झिगित्या। ५ ॰वोपादाभ्याम्भ.। ६ ॰सानमुत्सृज्य। ७ ॰माण। ८ ॰द्ध॰। ९ ॰मूत्रयमाणैः। १० ॰मीलन॰। ११ ॰सित्तीनां। १२ ॰शया। १३ ॰शैल॰।

धवलस्फारीभवत्प्रवाहैरतिप्रसृत[1]तयाऽतिस्वच्छतयाऽतिदूरतया चान्तराऽनभिलक्ष्य मूर्तिभिरधःशेवालपिच्छिलशिलातलेषु निपत्य स्खलनभयादिव निर्भरं पदमननुबध्न[2]द्भिरुत्पत्य गिरिनिकुञ्जान्तरालवर्त्मना भूयोऽपि सम्भूय प्रवर्तमानैर्निर्झरैर्गगनतलगलन्मन्दाकिनीस्रोतःसहस्राणीव दर्शयन्तीम्, क्वचि[3]त् सद्यःप्रभिन्नकरिकरटकण्डूयनोत्कर्षणदलितत्वचां सल्लकीनामामोदेन प्रसरता वासितनिकुञ्जोदराम्, पल्लवितामिव दवदहन[1]ज्वालासहस्रैः, कुसुमितामिव पुण्ड्रकोपचितचित्रलकैः, कलितामिवातिपीवरवर्ष्मभिः करिकुलैः, चित्रितामिव ताण्डवितशिखण्डैः[5] शिखण्डिमण्डलैः, मण्डितामिव निकुञ्जसञ्चारिभिः पुण्डरीकैः, सहासामिव गिरिगुहामुखान्तरालवर्तिभिः केसरिकिशोरकैः, उत्कण्टकि[7]-[F. 89. B]तामिव कण्टकिभिर्वेणुगहनैः, ऊर्ध्वकेशामिवोर्ध्वखर्जूरीवनैः, आरब्धकाकलीगीतिमिव मृदुपवनापूर्यमाणकीचकरन्ध्रध्वनितैः, प्रवृ[1]त्तनृत्तामिव समीरणोल्लासिभिः किसलयसहस्रैः, सस्वेदामिव तपनतापोत्तप्तशिलाजतुरसनिष्यन्दैः, वीज्यमानामिव पवनप्रेङ्खोलि[2]तोत्तालताडीदलैः, वाचालामिव सर्वतः प्रसृतशकुनिकुलकोलाहलैः, क्वचिदुद्वाप्यमानकरिमांसवल्लूराः, क्वचिच्छोष्यमाणशार्दूल[3]दीपित्वचः, क्वचिदानीयमाननिहतारण्यकद्विरददन्तमुशलाः, क्वचिद्विशसिताध्वन्यरुधिरलिप्तप्रक्षाल्यमानाम्बरारुणिमनिर्झराम्भसः[4], क्वचिदाँछिन्नपान्थसार्थार्थविभागोपजातविसंवादकलकलाकुलितप्रान्ततरुप्रच्छायभुवः, क्वचिन्निहितानेकमयूरपिच्छचित्रिततृणकु-[1][F. 90 A]टीरकनीध्रप्रान्ताः, क्वचित् स्वीक्रियमाणसार्थपदार्थाः, क्वचिद्विशोध्यमानसद्योनि[1]हतकरिरक्ताक्तकुम्भमुक्ताफलाः, क्वचिच्चैत्यद्रुमोपशल्यनिहतश्वापदकरङ्कपिशितगर्द्धप्रवृद्धक्रुधां कौलेयकानामन्योऽन्यसम्मर्दकोलाहलैः वाचालितदिशः, विशसितानेकश्वापदपिशि[3]तग्रामगृध्नुभिर्गृध्रपेटकैराबद्धमण्डलमुपरिभ्राम्यद्भिर्विशसनस्थानैकराज्यच्छत्रमिव दर्शयद्भिर्निवारितातपाः, सततमभितः पच्यमा[3]नपिशितातिबहलधूमध्यामलितगगनानुमीयमानवसतीर्भिल्लपल्लीः परिहरद्भिः सद्यो निहतानालोकयद्भिः पथि पथिकांश्च[4]कितैः शुष्यतालुभिश्चटुलविसंस्थुलपदन्यासैस्तदभिमुखं मुहुर्मुहुर्वलितग्रीवमालोकयद्भिः, समेऽपि च वर्त्मनि प्रस्खलद्भिरत्याकु-[5][F. 90. B]लतया स्तोकमुत्पथप्रवृत्तेश्चिरनिपतितजीर्णपर्णप्रकरसङ्कुलतया निजचरणपातोपजनितमर्मरध्वनिताकर्णनादापतच्चण्डश्वापद[1]भियेव मुहुर्मुहुस्त्रस्यद्भिस्तोकमप्यध्वानमतिबहु मन्यमानैः पथिकैर्लङ्घ्यमानमार्ग्गाम्, क्वचिदतिकालकायकान्तिभिश्चिपिटनासा-[2]पुटैर्वृत्तारुणविलोचनैर्गाढतरदेहबन्धसन्धिभिर्द्वित्रकचरचितकूर्चकैः सदैवाबद्धभ्रुकुटिभिः प्रविष्टहनुभिरुन्नतगण्डास्थिभिरविद्ध[3]प्रतनुश्रवणैर्बर्बरशिरोरुहैः परिधानीकृतमयूरपिच्छप्राग्भारैर्गृहीतधान्वनधनुभिरात्तद्वित्रकाष्ठमयमार्ग्गणैर्मृगयाप्रवृत्तैः शबरसे[4]नापतिभिरधिष्ठितया परितो दत्तशङ्खध्वनिभरितककुभा शबरसेनया दूरतोऽपि वित्रास्यमानोच्चण्ड-

---

१ दर्शयन्ती । २ पल्लवितनामिव । ३ पुन्द्र° । ४ चित्रतामिव । ५ क्वचिदाच्छिन्न° । ६ गृद्धभि° । ७ °वसत्ती । ८ मार्ग्गम् । ९ °रात्तंद्वित्र° । १० °पतिसिरमि° । ११ शयर° ।

श्वापदाम्, अतिविकटोत्तुङ्गगि[5]रिकुहरभीषणान्तरालप्रवृत्तनिस्विनी(?)शेवालपिच्छिलशिलातलेषु वर्त्मस्वदृश्यमानहिंस्रश्वापदामप्यश्रूयमाणविविधविहगध्वनिता-[6] [F. 91. A] मप्यनुलपभ्यमानाखिलापरभीतिहेतुमप्यतिमूकतयाऽपि द्विगुणतरभीतिदायिनीम्, दूरादेव सद्यो भृज्यमानाभ्यूषसुरभिगन्धानुमीय[1]मानकृष्यक्षेत्रसीमाभिः श्रूयमाणातिविकटकुकुटरटितैर्यवनोद्धृतवधूटिकाकृष्यमाणयन्त्रकमसृणचीत्कारानुमितनिःपिष्य[2]माणकोद्रवैः पच्यमानयवपिष्टवह्निकासुरभितकुटीरप्राङ्गणैः कण्डमानशालिक्षिप्तमुशलक्षोदनिनदानुयातकलमकण्डनीगीति[3]हारिभिर्विकटकटनिम्नदेशोपलक्ष्यमाणकतिपयतृणकुटीरकैर्निवासानतिदूरवर्तिवंशीवनगम्भीरैरम्भोहृदासन्नस्थानाहतस्थितिभिः[4] पथिकाश्वासहेतुभूतैरन्तरान्तरागिरिग्रामकैरधिष्ठिताम्, क्वचिदतिरुक्षद्राघीयश्शाखाशतश्लिष्टगगनतलैर्मुहुर्मुहुरुत्कूजज्जरत्कपो[5]तात्तशाखाशिखान्तरालैः क्षुद्रकीटकादित्सुकाष्ठकुट्टकोत्कुट्यमानस्कन्धकोटरग्रन्थिभिर्विरलदलतया विरलशा-[6] [F. 91. B] खतया च द्विधाऽप्यल्पच्छायैर्निसर्गरुक्षतयाऽतिकठिनमूर्तिभिः शुष्कशुष्यमाणजीर्णतरुसहस्रैराकुलाम्, क्वचिदकालनीलजलदभ्रमादुन्म[1]दनिनदं मयूरारावरमणीयसन्निवेशैः सदैव प्रस्रवन्निर्झरसलिलस्वीकृततया ग्रीष्मेऽप्यन्यवृक्षेभ्यः समाकृष्येव सततमधिकं नीलि[2]मानमुद्वहद्भिर्मार्गस्यान्तरान्तरोभयपार्श्ववर्तिभिर्निविडतरुखण्डैरध्यासिताम्, स्थानमनर्थानाम्, सदनं त्रासस्य, सनाभिं भीतेः, आस्पदं[3] विपदाम्, उद्भवक्षोणीं क्षोभस्य, कारणमुत्कम्पस्य, निदानं दवथूनाम्, आस्थानीं दौःस्थ्यस्य, भूमिं मनोभ्रमस्य, खानिं खेदस्य, निपद्यां विषा[4]दस्य, निधानं निर्वेदस्य, सीमां संतापस्य, आकरभुवं दुष्कृतविपाकानाम्, पोषहेतुं शोषस्य, आलीमाकुलतायाः, सखीं दुःखानाम्, मा[5]तरं मोहस्य, अतिरमणीयभीषणां विन्ध्याटवीं प्रापतुः। तन्मध्येन च गच्छतोस्तयोरवमितपाथेययोः सप्तरात्रमतिचक्राम।

अथ ताव-[6] [F. 92. A] त्यर्थं क्षुधातृष्णया च पीडि[12]तौ कथं कथमपि स्वादुस्वच्छसलिलं न्यग्रोधसनाथं तडागमेकं ददृशतुः।[13] ... .. .[1]स्याधस्ताद्दिवसमत्यवाहयताम्। अनु च प्राप्तायां रजन्यां दुष्टश्वापदभयाद् यामिकक्रमेण विहितोदीसकौ रात्रिमतिवाहयितुं प्रवृत्तौ।

अथ तृ[2]तीययामे सोमदत्तोऽतिपरिश्रान्तिवशादासीनप्रचलायितानि कुर्वन् श्रुताश्रुतैर्न्यायेन कपोतमिथुनस्य परस्परं जल्पतः संवादमशृ[3]णोत्। तत्र कपोतिकयाऽभिहितम्— 'नाथ! जातस्य जन्तोर्नियतमेव निर्याणेन भवितव्यम्। तद् यदि परोपकारित्वेन भव्यभङ्ग्या भवति तदतीव श्रे[4]यस्कारि। अतो वराकाविमौ ब्राह्मणकुमारकौ क्षुत्पीडितावस्मदाश्रयमागतौ यदि विपद्येते तदा किमावयोर्जीवितेन? तद् अनयोः प्राणया-[5]

---

१ श्रूयमाणा°। २ °नोद्धुरवधू°। ३ कन्दमान। ४ निम्नदेशो। ५ रत्नान्तरागिरि°। ६ क्वचिदन्तिरुक्ष°। ७ °निवड। ८ क्षोभस्या। ९ दौष्प्यस्य। १० आकार°। ११ दुःकृत°। १२ पीडितैः। १३ विनष्टान्यत्र १७–१८ अक्षराणि। १४ श्रुताश्रुता°।

ज्ञानिमित्तमात्मानमावां निवेदयावः।' त[ दि ]दमाकर्ण्य कपोतेनाभ्यधायि– 'प्रिये! साधूक्तं भवति मत्प्रिया भवती क्रियतां चैतत्। यो ह्यनयोर्मा[6] [F. 92 B]भक्षयिष्यति स राजा भविष्यति। यश्च त्वां स प्रतिदिनं सुवर्ण्णशतपञ्चकमाप्स्यति। इदमावयोर्जन्मसमये मुनिनोत्तङ्केन सूचितमासीत्' इत्यभिधाय[1] तावुभावेवात्मानं तत्रोद्दीप्तके चिक्षिपतुः। तद् वृत्तान्तमाकर्ण्य दृष्ट्वा च विस्मितेन सोमदत्तेन तावुद्दीप्तकादाकृष्य गृहीतौ। ततो ज्येष्ठं[2] भ्रातरमुत्थाप्य निवेद्य चास्मै वृत्तान्तं कपोतं तस्य भक्षणाय समर्पितवान्। स्वयं च कपोतिकां चखाद। अथाचम्य सुष्वपत्। यावत् स प्रातः प्रबु[3]ध्यते तावत् सोमदत्तस्य सविधे सुवर्ण्णशतपञ्चकमाविरभूत्। ततः सञ्जातप्रत्ययौ तौ तत्सुवर्ण्णमादाय प्रहृष्टौ पुनरपि यथाभिमतं गन्तुं प्रवृ[4]त्तौ।

अथ मार्ग्गे वहतोस्तयोरेकस्तृषाकरालितः पानीयमन्विष्यन्नन्यतः प्रववृते। अपरस्तु तथैव व्रजन् दूरं गतवान्। पूर्वस्तु जलमन्विष्य[5] व्यावृत्तो मार्ग्गात् परिभ्रष्टः। एवमुभावपि परस्परवियुक्तौ[6] [F. 93. A]मार्ग्गवैषम्यादन्यतोऽन्यतो जग्मतुः।

अथ कथावशाद् ज्येष्ठो मगधेषु राजा संवृत्तः। अपरस्तु परिभ्रमन्[3] काञ्चीनामनगरीमवापत्। तस्यां च विजितत्रिभु[1]वनरामणीयकसम्पदि मकरदंष्ट्राभिधाना कुट्टनी प्रतिवसति। तस्याश्च दुहिता कर्पूरिकानामाऽस्ति। यस्या नयनवागुरानिपतिताः षिङ्गमृ[2]गाः पदमपि गन्तुं न शक्नुवन्ति। तया च सह तत्र तस्य रतिसुखान्यनुभवतो बहूनि दिनान्यगच्छन्। प्रायच्छत् तस्याः स प्रतिदिनमपरिमितं सुवर्ण्णम्[3]। न चास्य कश्चिदप्यर्थी वैमुख्यमाजगाम। न चानवरतं प्रयच्छतोऽप्यस्यार्थः परिक्षीयते। एवमक्षीणविभवतां तस्य दृष्ट्वा एकदा मकरदंष्ट्रा[4] स्वदुहितरं कर्पूरिकामिदमभापत–'वत्से कर्पूरिके! प्रतिदिवसमयमेवमर्थैर्विलसति। नचास्यार्थागमोऽभिलक्ष्यः प्रतिभासते।' इति तयोक्ते[5] कर्पूरिकयाभ्यधायि–'अम्ब! अहमप्यस्यार्थागमं प्रति किमपि न जानामि।' इत्याकर्ण्य मकरदंष्ट्रा पुनरपि तामवो-[6] [F. 93. B]चत्–'आः पापे कर्पूरिके! न खलु त्वं मया जाताऽसि। या मत्तः प्रसूता स्यात् सा किमेवंविधा बहिर्मुखी भवति? तदिदानीं तथा त्वयाऽयमभियोक्तव्यो[1] रञ्जनीयश्च यथा स्वकीयमर्थागमं यथावद् भवत्याः कथयति।' ततः स तया नानाविधैरुपचारैः प्रियालापैश्च तथाऽऽवर्जितो यथा तस्यै कपोति[2]कावृत्तान्तमखिलमप्यकथयत्। तच्च कर्पूरिका कुट्टन्यै न्यवेदयत्। अथ विदितवृत्तान्ता कुट्टनी प्रत्युज्जीवितमिव लब्धनिधानमिव प्राप्तराज्यमि[3]वात्मानममन्यत। ततस्तया भोजनमध्ये वामनीयद्रव्याणि प्रक्षिप्य स भोजितः। ततः स भुक्तमात्र एवान्नमुद्ववाम। उद्वमंश्चासौ कपोतिका[4]मप्युदवमत्। तां च तेनोद्गीर्ण्णमात्रामतिलोभात् सलालामेव विजगाल। ततः-

१ सुषुपत्। २ °प्यन्नत्यतः। ३ °भ्रमत्। ४ °पतितः।

प्रभृति चास्य सुवर्णागमः प्रणनाश, कुट्टन्याश्च प्रववृते । अथ कुट्टनी[7] [ F. 94. A ] तं निस्तुषमवगम्य कमपि व्याजमुत्पाद्य निर्घोटयामास । ततः प्रणष्टसर्वस्वो जीवितशेषः किमिति मया स्ववृत्तान्तस्तस्याः कथित इत्यनुतप्यमानस्त[1]स्या नगरीतो निर्जगाम । निर्गत्य च परिभ्राम्यन् कियति दूरे पथिकेभ्य इदमश्रोषीत् यद्–'मगधेषु कश्चिद् वैदेशिको विष्णुदत्तो नाम राजा[2]सञ्जातः ।' स चातिधार्म्मिकस्त्यागी च । इदमाकर्ण्य कपोतिका-वृत्तान्तं स स्मृत्वा नूनं मद्भ्रात्रा भवितव्यमित्यवधार्य मगधान् स जगाम । गत्वा च[3]तत्रा-त्मानमस्मै ज्ञापयित्वा कतिपयान्यहानि च स्थित्वा ततोऽवाप्तविशिष्टतरार्थसम्भारः स्वपरा-भवप्रतिचिकीर्षया पुनरपि काञ्चीमाजगा[4]म । आगत्य च कर्पूरिकाप्रतिवेशिन्या ग्रहण-कमदात् । तया च सह तथैवार्थजातैर्विलसितुमारेभे । तेन च प्रथमदिनादप्यारभ्यत दातुः प–[5] [ F. 94. B ]

*[ अत्रादर्शे ९५ अङ्काङ्कितं पत्रं विनष्टम् ]*

.......प्रत्यवादयत् । साऽपि विश्रम्भमुत्पाद्य–'कुतोऽद्भुतार्थागतिनिमित्तमेतदासादितम्' इत्यपृच्छत् । सोऽभ्यधात्–'किमनया चिन्तया ? आस्ताम्, सुमह त्येषा कथा[1] । प्रति-दिनं पुनः पुनरनुबध्यमानेन चानेनैता वत्कथितम् यद्–'मया श्रीपर्वतं गत्वा प्राणा त्यय पर्यन्तानुष्ठानेन सिद्धिरियमासादिता ।' अथैक दा ते[2]न सह स्वयमपि गत्वा कर्पूरिका तस्यैवाश्वत्थद्रुमस्य तले तं विभवातिशयमपश्यत् । ततो द्विगुणतरजाताभिलाषा नानाविधै-रुपायैरावर्ज्य तमभि[3]हितवती– 'ममास्य विभवस्योपरि सुमहत् कौतुकम्, तद् यद्यहं भवतो वल्लभा प्रसादलेशो वा मयि विद्यते तत् सङ्घिः[7] क्रियतां कपोतिकास्वीकारेण ।' ततः सो[4]मदत्तेनाभ्यधायि–'सुतनु ! परिगणितार्थकपोतिकाव्यतिकरः, अपरिगणितेयं सिद्धिः । तत् कथमतुल्ययोर्विभवयोर्भवति सङ्घिः ? ।' कर्पूरिकयाऽभिहितम्–[5] 'तर्हि सप्त-वेण्यर्जितमपि मदीयं धनमादाय सङ्घिः क्रियताम् ।' सोमदत्तेनाभ्यधायि– 'भवत्स्नेहात् किं न क्रियते ? एवमस्तु ।' अर्प्पिता कपोति-[6] [F. 96. A ]का । ततो बहिः कृतामपि कुट्टनीमाहूय वामनीयद्रव्यैर्वामयित्वा कर्पूरिकया सप्तवेण्यर्जितेन धनेन ससाक्षिकं कपो-तिका प्रत्य[1]र्पिता । सोमदत्तेनापि तस्याः करे त्रिरुदकं प्रपात्योक्तं यथा– 'येयं मया श्रीपर्वते सिद्धिरासादिता सा त्रिसत्येन भवत्याः पर्यवस्यतु ।' कपोतिकां[2] चासौ प्रक्षाल्य गिलितवान् । धनं च स्वगृहान् प्रति प्राहिणोत् । राजपरिजनं च पञ्चरात्रपर्यन्तं तथैवाग-मनाय सङ्केतं ग्राहयित्वा आत्मना स्वभ्रातुः स[3]मीपमगात् ।

---

१ निर्धारिथा° । २ सुमहा° । ३ °मानेन वाचनेनैतावत् । ४ प्राणत्यय° । ५ अथैकग° । ६ मेन । ७ सष्टि । ८ बहि । ९ प्रत्यर्पत ।

अथान्येद्युः कर्पूरिका कुट्टन्या सहाश्वत्थस्य तले गत्वा कुक्कुटरटितमकरोत्। ततः स निखिलोऽपि राजपरिवारः पूर्ववत् सेवां चक्रे[1]। ततः पूर्णे पञ्चरात्रेऽवसिते च मूल्ये कृतकुक्कुटरटिताया अपि कर्पूरिकायाः समीपे न कश्चिदप्यागच्छत्। ततस्तदागमनाशयाऽश्वत्थस्येत[2]स्ततो भ्रान्त्वा पुनः पुनः कुक्कुटरटितान्यकरोत्। न च कश्चिदपि तां दिशमालोकयाञ्चक्रे। ततः कर्पूरिकायां कुक्कुटरटितानि कुर्वत्यां कुट्टन्याऽभि[3][ F. 96 B ] †हितम्–'किमिति पुत्रि! पूत्करोषि? यतः कपोतिकायां गृहे प्रविष्टायामेतदेव भवति।' ततस्तद्दासीभिरभिहितम्–'वाई ए कुक्कुड वासइ, एक्कु लियंतह दुइजउ नासइ।' इत्युक्त्वा ताः सर्वा अपि हताशा आत्मनः सदृशेन मुखेन यथास्थानमगमन्। सोमदत्तोऽपि मगधेषु राज्यं कुर्वतः स्वभ्रातुः समीपं गत्वा यथासुखमतिष्ठत्।

तत्पुत्रि! धूर्ता नातिपीडनीया, यतः पीडिताः सन्तः तत् किमपि कुर्वन्ति येन पूर्वसञ्चितमप्यर्थमादाय प्रयान्ति।

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां
कुट्टनीवञ्चनकथानिका सप्तमी समाप्ता।

---

## [ अष्टमी स्त्र्यनुरागकथानिका ]

यच्चोक्तं 'व्याघ्रादिव प्रेम्णः सततमात्मा रक्षणीय' इति तदपि ते प्रतिपादयामि; श्रूयताम्–

अस्त्यत्र पुण्ड्रवर्द्धनं नाम नगरम्। अनेकसुरसदनोद्यानदीर्घिकासरित्तडागादिभिरलङ्कृतमनेकमहाधनजननिवासितया स्पर्द्धमान[ F. 97. A ]मिवालकया। तत्र चाऽतिमहाधनो वणिग् वसुदत्तो नाम प्रतिवसति। तस्य चातिमहता कालेनोपयाचितशतैः पुत्रो रत्नदत्तनामा समजनि। स चैकपुत्रत्वादतिदुर्ललितः पित्रा विद्याग्रहणार्थमुपाध्यायवसुभूतेः समर्पितः। स च निसर्गेण श्रुतग्राहित्वात् सकृदध्याप्यमानः सकलमपि विद्यासमुदयमचिरेणैव जग्राह। सकलाः कलाश्च स्वीचकार। गजशिक्षायामारूढे गजायुर्वेदे, अश्ववाहनविधौ तुरगचिकित्सिते, वणिक्कलासु द्यूतरहस्ये, वैशिकोपनिषदि चित्रपत्रच्छेद[1]पुस्तप्रभृतिकलाकदम्बके परं प्रावीण्यमगमत्। एकदा तु समुपारूढयौवनः पितरमभ्यधात्– 'तात! युष्मत्प्रसादात् अधीताः सकला अपि मया विद्याः, अधिगतः कलाकलापः, विदितानि सर्वविज्ञानानि, तन्मयाऽपि त्व[2]द्धनोपभोगेन दिनान्य[3]तिवाह्यन्त इत्यात्मनोऽप्यतित्रपा-

---

१ °छेद्य°। २ °स्वधनो°। ३ दिनानतिवा°।

† ९७तमस्य पत्रस्य प्रतिलिपिरनन्तरं प्राप्ता। तस्यां लिपिकारेण पङ्क्तिसङ्ख्या नाङ्किता, अतोऽत्र तत्सूचका अङ्का नोल्लिखिताः।

करमिव [F. 97 B] प्रतिभाति, तद् दीयतामादेशः, येनाहं स्वभुजाभ्यामेवार्थमर्जयामि' इत्युक्ते पित्रा बहुविधं प्रबोधितोऽपि रत्नदत्तः कथमपि न तस्थौ। धनार्ज[1]नाय दीयमानं प्रभूतमपि धनं न जग्राह। केवलं सुवर्णसहस्रमेकमादाय सुबन्धुनाम्नाऽनुचरेणानुगम्यमानः प्रतस्थे। अचिन्तयच्चैवम्—अति[2]निन्दितोऽयमसत्कुलक्रमागतोऽर्थोपार्जनोपायः। तन्मया चक्रवर्तिसेवया धनमर्जनीयमिति निश्चित्य मान्य[2]खेटाधिपतिबद्रामुकु[3]टमवनिपतिमवलगितुमुच्चचाल। स च तस्यानुचरः सुबन्धुर्गृहीततदीयखड्गवसुनन्दकस्तमेवानुजगाम। अनुगच्छता च तेन रत्नदत्तो[4]ऽभ्यधायि— 'इदं भवता पितुः प्रभूतं प्रयच्छतोऽपि सुतरामल्पीयं पाथेयं गृहीतम्, तत् कथमेतावता राजसेवाक्षमावावां भविष्यावः? पथि[5][F. 98. A] च कथं निर्वाहो भविष्यति?' एवमभिहिते रत्नदत्तेनाभ्यधायि— 'आपातोपयोगार्थमेव मयेदमग्राहि। न पुनः पाथेयबुद्ध्या। या कला[1] याश्च विद्या यानि च विज्ञानानि मया शिक्षितानि तान्येव मे पाथेयम्। द्यूते यत् किमपि कितवानां वित्तं तन्मदीयम्। पत्तनेषु च यद् वेश्यानां[2]धनं तदपि मदीयमेव। अतस्तेनैव मे निर्वाहो भविष्यति। इयं च मे प्रतिज्ञा यद्यहं दृष्टस्तदवश्यं वेश्या मामाह्वयन्ति न च मोचयन्ति। यदि मां नाह्वय[3]न्ति मोचयन्ति तदा तत्कालमेवाहं प्राणानुत्सृजामि।' इत्येवमभिधाय सुबन्धुना सह प्रतस्थे।

अथ गच्छता तेन कियद्भिरप्य[1]होभिरासादि विदिशा नाम नगरी। तत्र च भाइलस्वामिदेवपुरे सौन्दर्यैकवसतिर्लोभैकपात्रमुद्भिद्यमानतरुणिम्नि स्मरविलासै-[5][F. 98. B] कास्पदे वयसि वर्तमाना मुहुर्मुहुः प्रयत्नोपचितमुग्धालकललाटफलकतया मृदुलमारुतोपनीयमानालिवलयकलितकमलैकदे[1]शेव तामरसिनी, स्तोकस्तोकोद्भवविलासभङ्गुरितभ्रूयुगलतया समारोप्यमाणगुणविनम्रदृढनिबद्धेव स्मरधनुर्लता, असक[2]लोन्मीलन्मनोभवाभिनवविलासचतुरावलोकनतया मुहुर्मुहुः प्रतनुपवनकम्पमानोच्छुद्धकुड्मलैवोत्पलिनी, अभिनवाविर्भ[3]वलावण्यसंवर्गितकपोलतया दरपरिपाकालिङ्गितफलेव लवलीलता, प्रतिदिनोन्मीलदसमलावण्यकमनीयकण्ठकाण्डतया स[4]मुद्भिद्यमानानतिपृथुलचन्दनकन्दलेव मलयोपत्यका, प्रतिदिवसोपचीयमानाभिनवसौन्दर्यचारुभुजलतायुगलतया उल्लसन्मुग्धवि-[6]लसितेव मदनविलासदीर्घिका, मुग्धोद्भूतकुचकुड्मलतयोद्भिन्नबालमुकुलेव मकरध्वजक्रीडाकमलसरसी, किञ्चिदुद्भिद्यमानप्रतनु-[6][F. 99. A]रोमावलीकलितत्रिवलीतरङ्गतया दरदृश्यबालशेवालवल्लरीपरिष्वज्यमानवीचिरिव स्मरतरङ्गिणी, क्रमोपनीयमानरसनागुणस्थान[1]तया विस्तार्यमाणकनकफलकेव मदनदोला, स्तोकस्तोकोल्लसल्लावण्यक्रमोपचितवृत्तोरुयुगलजङ्घाकाण्डतया प्रतिदिशोपजाय[2]मानरामणीयकमुग्धकदलीकाण्डयुगलेव स्मर-

१ °र्थोपार्यनोपाय०। २ मानाखेटा°। ३ °मुद्धचाल। ४ °नमदठनिद्धयेव। ५ मानाह्वोद्धद्ध। ६ °जुगल।

प्रमदोद्यानवसुधा, प्रतिक्षणमुपचीयमाननिसर्गारुणचरणकान्तिमत्तया विकासोल्लास-[3] संवर्ग्यमाणकमलेव स्थलनलिनी, तथाप्यालिङ्गितेव स्वजातिसहभुवा वैदग्ध्येन विदग्धजनमनोहारिणी निरुपम[लावण्या] लावण्यसुन्दरीनामा[1]ऽर्घवित्तिका प्रख्याता वेश्या प्रतिवसति। सा च देवस्य पुरतो नर्तनपाल्यां नर्तितुमाजगाम।

अथ सोऽपि तस्मिन्नेव क्षणे देवदिदृक्षया तत्रैवा[2]गमत्। तं च मत्तवारणकनिविष्टमवधूततयाऽपि निजसौन्दर्योपहस्तितकन्दर्पदर्पं लावण्यसुन्दरी ददर्श। स च दृष्टमात्र एव मन्मथास्त्रैः सह प्रवि[6]-[F. 99. B] वेश तस्या हृदयम्। अथ सा तद्दर्शनसमकालमेव मदनपरवशा मूर्च्छाविकलाङ्गी भुवि पपात। क्षणाच्च कथं कथमपि लब्धसञ्ज्ञा 'शिरो मे व्यथते' इ[1]ति नर्तनोपाध्यायस्य पुरतो व्याजमकरोत्। अथ विदिततदभिप्रायया तदीयसख्या वकुलिकया तदाकारगोपनं कुर्वत्या नर्तनो[2]पाध्यायोऽभ्यधायि— 'प्रागेवानया ममाग्रतः कथितं शिरोव्यथा मेऽस्तीति। तत् प्रयात्वेषा स्वगृहम्। अहमेवास्या वारनृत्तं निर्वर्तयिष्यामि' इत्यभि[3]धाय तां सम्प्रेष्य स्वयं च देवकुलवेलां निर्वर्त्य तस्याः समीपं जगाम। तत्रोपविश्य शरीरवार्तामापृच्छ्य विहस्य चेदमभ्यधात्— 'सखि लावण्य[4]सुन्दरि? त्वं सदैवास्मानुपहसितवती, इदं च पुनः पुनरभ्यधा[त्] यत् किल भवत्यो रुचितधृष्टिकास्तदिदानीं कीदृशं प्रतिभाति। भद्रिकास्तावद् वयमा[5]सहे। याः प्रथममवलोक्य रूपमवगम्य शीलमवगत्य स्थानमासाद्य सम्भोगमङ्गीकुर्म्मः पुरुषम्। त्वं पुन-[6] [F. 100. A] रत्रातिपुण्यवती याऽनवगतनिवासस्थानशीलसम्पत्तावपि पुरुषे दर्शनमात्रेणैवानुरज्यसे। इदानीं [इमां] चावस्थां प्राप्तासि', इत्याकर्ण्य लाव[1]ण्यसुन्दर्येदमभ्यधायि—'साधु कृतं भवत्या यत् प्रत्युच्चारिताऽस्मि। यन्मदीयाहङ्कृतस्य सौभाग्यगर्वस्य यौवनमदस्य चेदमेवोचितम्। किन्तु[2] नाभिज्ञाऽसि, वक्तुं परमीदृशं नर्म्म च मर्मस्पर्शि नोचितम्। तदित्थं मर्म्मव्यथितायां मयि न युज्यते वक्तुमिदं भवत्या। साम्प्रतमिदमेव त्वदीय[3]स्य सखीत्वस्य मे फलं यदस्मिन् समये यद् बुध्यते तद् विधीयते।' इत्यभिहितया तयेदमभ्यधायि—'किं मदीयेन सखीत्वेन यद्येतावदपि[4] त्वत्समीहितमहं न साधयामि।' इत्युक्ते लावण्यसुन्दर्यवादीत्—'त्वमिदमत्यल्पं मन्यसे। इदं तु सखि! दुष्करमेव। यतस्तमालोक्य स्वप्रयोजन[5] एव प्रवर्त्स्यति भवती। मत्प्रयोजनानि तु विस्मरिष्यति।' इत्याकर्ण्य वकुलिकया[3]ऽभ्यधायि—'सखि! यस्तु सौ-[6][F. 100. B] न्दर्याद् यद्यप्येवं तथाप्येवं न भवतीति मयि सम्भाव्यताम्, अवश्यमानीय भवत्या संयोजयाम्येनम्।' इत्यभिधाय प्रतस्थे। चिन्तितं चानया यदपूर्वः[1] पुमान् स्थानद्वय एवावाप्यते, यदि स्वाध्यायी तदा मठिकादौ, अथ राजपुत्रादिस्तदा शून्यदेवालयादौ। तद् देवगृहादौ प्रथममेवान्वेषया[2]मि। इति विचिन्त्यान्विष्यन्ती

१ स्थलगलिनी। २ °मास्वाद्य। ३ वकुलिकायाभ्य°।

शून्यदेवायतने तमनुचरेणोपास्यमानं शयानमपश्यत्। ततः सा तं तदीयमनुचरमवोचत्–'भो! सन्ध्यायां[3] शयनं भाग्यवतां नोचितम्। अयं त्वत्सखा भाग्यवानिवालोक्यते अतः प्रबोधनयैनम्।' इत्युक्तेन तेनासौ प्रबोधितः। ततस्तयोक्तम्–'भो प्राह्व[4]णिक! कुत आगम्यते?' रत्नदत्तेनाभ्यधायि–'देशान्तराद् वयमायाताः, चक्रवर्तिनमवलगयितुं गमिष्यामः'[5] [F.101.A] इति श्रुत्वा बकुलिका क्षणमिव स्थित्वा रोदितुमारेभे। अथ तां रत्नदत्तोऽभ्यधात्–'भद्रे! किमिति रुद्यसे?' साऽब्रवीत्–'भवतां सदृशाकारो मम भ्रातासी[1]त् तमनुस्मृत्य ममाश्रु प्रवृत्तम्। तद् भवन्तोऽपि मम भ्रातरो भवन्ति।' इत्याकर्ण्य तेनोक्तम्–'सत्यमेतत्, किन्तु त्वद्भ्राता त्वदर्थक्षतावेव निमित्तमासी[2]त्, अहं तु यत्र यत्र क्वचिदार्तिर्भवत्यास्तत्र तत्र भ्राता।' इति श्रुत्वा बकुलिकयोक्तं–'तद् गम्यतामस्मद्गृहं तत्र प्राह्वणिकैर्भूयताम्' इत्यभिधा[3]य तमादाय बकुलिका लावण्यसुन्दर्या गृहमगात्। लावण्यसुन्दरी तु स्वगृहस्योपरि स्थिता गृहीतविषग्रन्थिरिदमचिन्तयत्–ममाद्य[4] किमर्थद्वयक्षतिर्भविष्यति उतार्थसिद्धिरिति न जाने। यदि तावद् बकुलिका तं स्वगृहान् नयति[5] [F.101.B] तदा सखी मम हस्तादुत्तीर्णा, सोऽप्यभिलपितो गतः। तदेवमहं विपत्स्ये–इति चिन्तयन्त्येव यावदास्ते तावद् बकुलिका तदाशयमाशङ्कमाना तदीयगृ[1]हमेव तमनयत्। दृष्ट्वा तु लावण्यसुन्दरी मनाक् परितुष्टेव प्राह–'बकुलिके! कोऽयं प्राह्वणिकः?' तयाऽभिहितम्–'अस्मद्भ्राता' इति बकुलिकयाऽभिहि[2]ते अपगतशङ्का कृतकृत्यमात्मानं मन्यमाना तस्योपवेशनकमदापयत्। अथ बकुलिकयाऽभ्यधायि–'प्राह्वणिमकस्यास्मद्भ्रातुः क्रियताम्।' इत्य[3]भिहिता सा स्वविभवानुरूपमनुरागानुरूपं च तस्य स्नानभोजनादिकं प्राह्वणिकमकरोत्। क्रमाच्च प्रदोषेऽतिक्रान्ते बकुलिकायां च स्वगृहं ग[4]तायां सा रत्नदत्तं शयनीयमनयत्। तत्र यावत् तेन सह सङ्गच्छते तावद् रूपाच्छतगुणं तदीयं वैदग्ध्यमावर्जकत्वं गुणांश्चापश्यत्। तेन तस्यामेव रा[5]त्रौ सा तथा कथञ्चिदावर्जिता यथा तत्क्षण एव परित्यक्तापरपुरुषाभिलाषा तदेकवारिण्येवाभवत्। अथ परिणतिमागच्छत्यां रजन्यां तथैव ल[6]-[F.102.A]क्ष्यमाणेषु निखिलेष्वपि तमस्तारकाप्रभृतिषु भावेष्वपरिकलितस्वरूपस्य भगवतः कालस्य वशादवसितायामिव प्रतिभासमानायाम्, क्रमेण[1] च विजितातिस्थूलमुक्ताफलत्विषि कर्कोपलनिकर इव विलीयमाने तारागणे, अस्ताचलशिखरवर्तिनः शशधरस्य प्रभापटलेनानुविद्ध[2]मारुणं तेजो दधति, अमलमुक्तामणिमयूखचुम्बितस्योल्लसद्बहलविद्रुमलताकिरणशोणिम्नो जलधिपुलिनस्य लक्ष्मीमुद्वहति गगनतले[3], व्यपसरत्तिमिरप्रसरसंवलितेषु उदेष्यतः कमलिनीपतेरंशुभिः कपिशितेष्वनच्छरजनीरसोन्मार्जितेभ्यः करटीकपोलस्थलेभ्यः कान्ति[4]माहृत्य घटितेष्विव

१ कारको°। २ प्रसंरसवलितेषु। ३ करलि।

प्रतिभासमानेषु दिक्कूटेषु, एकतः पारापतपक्षपत्रधूसरैस्तमोभिराकलिते, अन्यतः स्तोक-पाकोपगूढकुवल[ य ]कलको[5]मलेनारुणकरनिकरशोणिम्ना शबलिते, अन्यत्र ताडीदल-पाकपाण्डुभिः प्रतनिमानमागतैः शशधरमहोभिराच्छुरिते, अपरत्रोपलक्ष्यमा[5]-[F. 102.B] णावसीदद्विरलतारके, अन्यतस्तमोलेशावशेषश्यामलतयाऽनुपहतकतिपयस्थूलोडुनिस्फारे चित्रपट इव हरंति चेतांस्यम्बरतले, सततस[1]ञ्चरणश्रमादिव मन्दमन्दसञ्चारिणि विनिद्रो-द्दण्डपुण्डरीकेषु कमलिनीखण्डेषु मुहुर्मुहुः स्खलिते, कथमप्यासादितसौधवातायनान्तरेण प्रवि[2]श्य सुरतकेलिक्लमग्लपितयोर्दम्पत्योः श्रमसलिलबिन्दूनतितर्पादिवाचामत्युपवन-कुसुमरजःप्रकरधूसरत्विषि प्राभातिके मातरिश्वनि, तत्क्ष[3]णपरित्यक्तनिद्रालसकण्ठकुहर-स्खलनजर्जरे रजनीविरामशंसिनि दिनलक्ष्मीप्रवेशमङ्गलपटहे मानिनीमानग्रहोच्छादन-मन्त्र इव श्रोत्र[4]विवरमाविशति मुहुर्मुहुः कुक्कुटध्वनिते, आविर्भवनिर्भरानुरागतया निर्दय-निधुवनोपमर्दजनितजडिमतया च मुहुर्मुहुर्विघटितसङ्घटितनिद्रालसे[5]ष्वाश्लेषदत्तहृदयेषु विश्लिष्यद्भुजलतेषु च शिशयिषमाणेषु कामिजनमिथुनेषु, रविकिरणकुञ्चिकोद्घाट्यमान-दलकवाटेषु प्राग[6]-[F. 103 A]न्तरुषितैर्यामिकैरिव मधुकरैर्विमुच्यमानेष्वेकैरपरैस्त्वाप-तद्भिः प्रतिगृह्यमाणेषु प्रकटितद्वारेषु श्रियो विलासभवनेषु पङ्कजेषु सद्यो[1]विगतनिद्रतया-मन्दमन्दमुन्मुक्तगुञ्जितीनां कुसुमकोशेभ्यः समुत्पित्सतां मधुकरद्वन्द्वानां परागभरमन्थराः पक्षपालीर्जडिमानमानयत्य[2]लक्ष्यमाणक्रमसङ्कलनविगलिते तुहिनकणनिकरशीतले शनै-रवश्यायसलिले, प्रथममुच्छ्वसितस्तोकस्तोकहुङ्कृतीनां निद्रावशे[3]षोन्मिषदलसपक्ष्मपुटतया किञ्चिदुन्मीलितदृशां स्वापसङ्कुचितगात्रप्रसरोत्सुकतया च मुहुर्मुहुर्विधुतजडितपक्षतीनामु-द्बोधमागच्छ[4]तां खगकुलानां वाचालयति तरुशिखरान्तराणि, क्रमोपचीयमानबहलिम्नि कोलाहले शनैः शनैः प्रौढिक्रमविघटमानसन्धिबन्धनत[5]या परस्परोन्मुच्यमानपृष्ठश्लथ-दलेषु मनाग् दलितवदनतया च दरदृश्यमानावश्यायजलजडितमकरन्दकणिकेषु निर्भर-विकाशोद्वेल्ल[6]-[F.103.B]द्दलतया मधुकराणां मधुसत्रप्रवर्तनार्थमिव प्रकाशितकोशेषु कुसुमवीरुधां विकासमायत्सु मुकुलोत्करेषु, ध्वान्तध्वंसनैकदक्षस्य भगवत[1]स्त्रिलोकैक-चक्षुषो मित्रस्याप्युदयमसहमानेष्विव विच्छायतामाश्रयत्सु जडाशयोत्पत्तेरगुणतायाः स्वनाम्नश्च सदृशमाचेष्टमानेषु कु[2]मुदाकरेषु, चिरप्रवासिनमायान्तमवगत्य दिवसकरमरुण-रोचिषा लोहि[ति]षु कवलितकुङ्कुमाङ्गरागास्विव कामपि श्रियमाश्रयन्तीषु प्र[3]सन्नवदनासु दिग्वधूसु, पवनाहतैरिवाच्छाच्छसिन्दूररजःपटलपाटलेनारुणज्योतिषा गलहस्त्यमानैस्ति-मिरपरिघैरतिजवाद्विमुच्यमाने[4]षु गगनभागेषु, विवृतचञ्चुपुटास्वखिलामपि रात्रिमापीय ज्योत्स्नारसमतिसौहित्यान्मन्दमन्दगमनासु विलासमणिवेदिकामाश्रयन्तीषु[5][F.104.A] निद्रालसस्तिमितलोचनासु चकोरकुटुम्बिनीषु, प्रकटिताशेषवस्तुसार्थैरालोकैरपि तमःपटलै-रिवाच्छाद्यमानासु दोषैकदृष्टेर्दुर्ज[1]नस्येव कौशिककुटुम्बकस्य दृष्टिषु, दूरादपि समेत्य

---

१ हरिति । २ °चेतांसाम्बर° । ३ प्रभातिके । ४ पक्षा° ।

विधिविलसितेष्विव क्रीडाकमलदीर्घिकानामन्तरुज्झितपक्षपातेषु झंटिति[1] घ[2]टमानेषु चक्रवाकमिथुनेषु, आश्रितवैराग्येषु योगिष्विव गृहावस्थितिविमुखेषु निर्वाणमाश्रयत्सु प्रदीपेषु, स्फुरदकठोरकम[3]लकिञ्जल्कजर्जरोवर्जितमकरन्दकणकषायिते[3] सङ्गमोत्सुकप्रचलचक्रवाककामिनीपक्षविक्षोभिताम्भःप्रसरशीकरासारसम्पर्क[4]शिशिरिते मन्दमन्दान्दोलितोपवनकुसुमवीरुधि प्रबुद्धमधुकरध्वनितमधुरिमानन्दितोद्दामनिधुवनक्लान्तकामिनीजनश्रवणविवरे[5][F.104.B]वाति प्राभातिके मरुति, अनास्त्यानजतुरसत्विषा बालातपच्छायाप्रसरेण विच्छुरितच्छदतया रक्ताम्बुजवनभ्रममावहत्सु पुण्डरीकखण्डेषु, त[1]मोलेशावशेषलिप्तवलतया गहनोदरवर्तिनां जलाशयानां क्षणमिन्दीवरभ्रान्तिमुत्पादयत्सु कुमुदकाननेषु, उदयशैलशिखरचू[2]डामणितामाश्रयतो दलितदाडिमप्रसूनपाटलस्य पाटितत्तमसः प्रकाशिताशेषभुवनाभोगस्य भगवतो भास्वतः प्रभाजालेन जीवित[3]इव उच्छ्वसित इव प्रबोधित इव निखिलेऽपि भुवनतले, सुबन्धुना सुवर्णशतानि पञ्च प्रच्छदपटे बन्धयित्वा तत्पार्श्वात् तदीयामनुचरीम्—'त्वया प्र[1]च्छदपटोऽन्वेषणीय' इत्याभाष्य द्यूतक्रीडार्थं टिण्टां जगाम। ततो लावण्यसुन्दरी यावदुत्थायावलोकयति तावत् तमपश्यन्ती क्व गतोऽसाविति निजा[5]मनुचरीमपृच्छत्। साऽभ्यधात्—'गतः सः, परं क्व गत इति न ज्ञायते। किन्तु गच्छता तेनेदमभिहितं यत् प्रच्छदपटोऽन्वेषणीयः' इति। ततस्तदभिहितयानुचर्या[6][F.105 A]तथाकृते सुवर्णशतपञ्चकं प्रच्छदपटप्रान्तनिबद्धमवलोक्याभ्यधायि लावण्यसुन्दर्या—'न केवलमसौ रूपवान् विदग्धो युवा, दाताऽपि। अहो सुवर्ण[1]मन्यत् सुरभि क्व प्राप्यते?' ततो वकुलिकायामागतायाम्—'भद्रे! गतोऽसौ क्वापि तदन्विष्यताम्' इत्यवदत्। अथ वकुलिकाश्वतरीमारुह्य सपरिच्छदा[2] नूनमनेन टिण्टायां भवितव्यमिति टिण्टां जगाम। तत्र महाधनानां मध्ये प्रागल्भ्येन तं क्रीडन्तमवलोकयन्ती यतो द्यूतकाराणां बह्व्यो वध्या(?)भव[3]न्तीति तूष्णीमेव तस्थौ। अनन्तरमसाव[व]लोक्य—'अक्क! कियत्कालमिहागतायाः' इत्यपृच्छत्। साऽब्रवीत्—'अतिचिरं वर्तत' इति तयाभिहिते—'अनुचितस्था[4]ने भवादृशीनामागन्तुं न युज्यते' इत्यभिधाय प्रतिकितारं प्रक्षिप्य—'लेख्यकं क्रियताम्' इति सभिकमभ्यधात्। अथ—'द्रम्माणां सहस्राणि पञ्चाशद् भवता[5]जितानि' इति सभिकेनाभिहितम्। सोऽब्रवीत्—'अक्कायास्तावद् द्रम्मसहस्राणि चत्वारि ताम्बूलार्थं प्रदीयताम्, तथा षोडशसहस्राणि लावण्यसुन्दर्याः[6] [F.105. B] प्रेष्यताम्' इत्यभिधाय द्रम्मसहस्रैर्दशभिस्त्यागं कृत्वा वकुलिकया सार्धं लावण्यसुन्दर्या गृहमगात्। ततः स्व[1]विभवानुरूपैः स्नानभोजनादिभिरुपकारैस्तद्दिनमत्यवाहयत्। रजन्यां तु लावण्यसुन्दरी सुरतोपभोगमनुभूय जातप्रणया तमवोचत्[2]—'कुत

१ झटति। २ जर्जराणावर्जित°। ३ °कषायेते। ४ प्रभातिके। ५ अनास्थान°। ६ तत्पारस्वात्। ७ टेटां। ८ गतोसावति। ९ प्रीत। १० °क्याभिधायि। ११ वख्या। १२ प्रतिकर्ता।

आगम्यते क्व वा गन्तव्यम् ?' इति पृष्टः स आगमनस्थानमावेद्य प्रतापमुकुटनामानं चक्रवर्तिनमवलगितुं प्रातरेवास्माभिर्गन्तव्यम्'(3) इत्यवदत्। तयोक्तम्–'यद्यर्थोपार्जनार्थमेव गन्तव्यं तदा भूयानर्थसञ्चयो ममाप्यस्ति स तावदुपयुज्यताम्। तस्मिन् परिक्षीणे यथा तुभ्यं रो(4)चिष्यते तथा कुर्य्याः।' ततस्तेनाभिहितम्–'भवतीनामङ्गमेवोपयुज्यते न पुनरर्थः। स हि दीयत एव। तदवश्यं मया प्रातर्गन्तव्यम्।' अन्येद्युः(5) सा ढोण्ढाभिधानायाः कुट्टन्याः सकाशं गत्वेदमभ्यधात्–'मातस्तदीयवचनातिक्रमं[3] न करोमि। न चास्मिन् गते जीवितुं शक्नोमि। तदादिश(6)[F.106.A] यदत्र कर्तव्यम्।' इति श्रुत्वा कुट्टन्या बहुशस्तन्निवारणाय सा प्रबोधयितुमारेभे। प्रबोध्यमानाऽपि यदा नाबुध्यत तदा कुट्टन्यचिन्तयत्–'भव(1)त्वनुमतिं करोमि। इयं हि सुकुमारा कियन्तमप्यध्वानं गत्वा क्लेशायासाननुभूय स्वयमेव प्रबोधमेष्यति।' इति विचिन्त्य–'भवत्वहमपि(2) भवत्या सहैव गमिष्यामि' इत्यनुमतिमदात्। ततो रत्नदत्तेन सह लावण्यसुन्दरी कुट्टनी च गन्तुं प्रववृते। अथ ते शनैः शनैर्गच्छन्तः किय(3)द्भिरप्यहोभिः पूर्णपथकाभिधानं पत्तनमासेदुः। ततो बहिरेव पत्तनस्योपवनभुवि महतश्चूतद्रुमस्याधस्ताद् लावण्यसुन्दर्यु[4]त्सङ्गे शिरो निधा(4)य रत्नदत्तः सुष्वाप। तत्परिचारकेषु च भोजनाद्युपकरणमाहर्तुं पत्तनस्यान्तर्गतेषु कुट्टन्यचिन्तयत्–'सर्वथैव गमने प्रवृत्तेयम्। तत्प्रपञ्चक(5)मपि विधाय राज्ञे निवेद्य घातयित्वैनमेतां गृहीत्वा स्वनगरं गच्छामि।' इत्यालोच्य कुसुमानि गृहीत्वा(6)[F.106.B] राज्ञा सूरधर्म्मणः सकाशं गत्वा व्यजिज्ञपत्–'देव! मम यौवने चतुर्थेऽह्नि स्नातायाः समागमो देवेन सार्धमभवत्। तत्र च दुहिता मे समजनि[5]। देवेन या[6] समुत्पन्ना सा[7] कलसुन्दर्येव भवति। सा च ठकेनैकेन ठकयित्वा[8] नीयमाना तिष्ठति। तेनाहं देवं विज्ञप्तुमागता। तदत्र देवः(2) प्रमाणम्' इत्याकर्ण्य राजा दाण्डपाशिकमादिदेश–'येनास्मद्दुहिता ठकिता स शीघ्रमेव निगृह्यताम्' इत्यादिष्टो दाण्डपाशिकः स्वपत्ति(3)भिः सह तत्सविधमगात्। तत्र यावदालोकयति तावल्लावण्यसुन्दर्याः[10] प्रहृष्टायाः स्नेहेनोत्सङ्ग निहितमूर्धानं युवानमतिसुन्दरं पु(4)रुषं शयानमपश्यत्। ततो दाण्डपाशिकस्तमवलोक्याचिन्तयत्–'नूनमनुरागादनेन सह गन्तुं प्रवृत्ता। तन्न ठकितेयमेतेन। असत्येयं कुट्ट(5)[F.107.A]नी, तद् भवतु यावदयं स्वपिति तावदत्रैव तिष्ठामि, प्रबुद्धे तु वृत्तान्तं प्रक्ष्यामि।' ततो यावद्विलम्बो दाण्डपाशिकस्य समजनि(1) तावद् राज्ञाभ्यधायि–'किमिति दाण्डपाशिकस्य विलम्बः ?' ततः कुट्टन्याऽभिहितम्–'देव! विज्ञप्तमेव मया स ह्यतिमहांष्ठकोऽतस्तेन दाण्डपाशिकोऽपि ठकितः(2)।' ततो राज्ञा बहवः सामन्तास्तत्र प्रैष्यन्त[14]।

---

१ °व्यः। २ स। ३ °वचमाति°। ४ °सुन्दर्युच्छङ्गे। ५ समयनि। ६ य। ७ स। ८ ठकइत्वा। ९ दण्ड°। १० °सुन्दर्या। ११ दण्ड°। १२ दण्ड°। १३ दण्ड°। १४ प्रेष्यन्त।

तैरपि तद्वृत्तान्तं दाण्डपाशिकादवगम्य तथैवावधार्य तत्रैव व्यलम्ब्यत। ततो राज्ञाभिहितम्–'ते[3]ऽप्यतिचिरयन्ति तत् किमेतत् ?' ततः कुट्टन्याभिहितम्–'देव! तेऽपि तेन ठकिताः तत् स्वयं गम्यताम्। किन्तु सावधानतया गन्तव्यम्। यतः स यावतः[4] पश्यति तावतः सर्वान् ठकयति।' ततः स नृपतिरारचनां कृत्वा तत्सविधमगमत्। ततो लावण्यसुन्दर्या राजानमागच्छन्तमालोक्य प्रबो-[5][F. 107. B]धितो रत्नदत्तः। प्रबुद्धस्त्विदमभाष्यत–रत्नदत्त! भवता ममाग्रत इदमभिहितं यदहमूर्ध्वस्थितश्चतुःषष्टेः पुरुषाणां कडितच्छां जानामि, उपविष्टस्तु द्वात्रिं[1][शताम्], [सु]प्तस्तु षोडशानाम्, तदयं स समयो यत्तु मया त्वमियतीं वेलां न प्रबोधितस्तदल्पका एते इत्थमवगम्य, इदानीं तु यद् बुध्यते तद्विधीयता[2]म्' इत्याकर्ण्य–'साधु कृतम्[3]' अभिधाय संयतो भूत्वा खड्गवसुनन्दकपाणिस्तदखिलमपि बलं तृणायमन्यमानस्तदभिमुखं प्रतस्थे। राजा तु तस्य शौर्य[3]मवलोक्य लावण्यसुन्दर्याश्च प्रसन्नतामवगम्याचिन्तयत्–'न भवत्येषा ठकिता। ठकितानां ह्यन्यान्येव रूपाणि भवन्ति। प्रपञ्चेन कुट्टन्येनं व्यापा[1]दयितुमिच्छति। तदसत्येयं पापा, अनुरागादेतद्दुहितेयमनेन सह गन्तुमुद्यता' इत्यवधार्य 'यद्यहमत्रैव तिष्ठामि तदयं विनाश[5]मुपगच्छति' इति निश्चित्य स्वगृहान् गत्वा तदाकारणाय प्रतीहारं प्राहिणोत्। इदं च चिन्तितवान्–'धन्यः स पुमान् यस्यायं पदातित्वमेष्यति।' ततः प्रतीहारो ग-[6][F. 108 A]त्वा रत्नदत्तमवदत्–'राजा सूरधर्म्मा त्वामाह्वयति।' ततः स गत्वा पादयोरपतन्नेव राजानमपश्यत्। राज्ञा तूपवेशनकताम्बूलदानादिगौरवपुरः[1]सरं पृष्टः–'भद्र! क्व गन्तव्यम्? को देश उद्वासितः? को वा सनाथः कर्तव्यः?' इत्यभिहिते 'चक्रवर्तिनमवलगितुं यास्यामि' इत्यवदत्। ततो राज्ञाऽभ्यधायि[2]–'यदि नातिक्लेशका[रि त]दा अत्रैव गोष्ठ्या कियत्कालं स्थीयताम्। मदीयान्यष्टचत्वारिंशत् सहस्राणि ग्रामाणां तदर्धं भवान् गृह्णातु, अर्धं तु मम प्रय[3][च्छतु' इ]त्यादि सगौरवमभिहितोऽप्यप्रतिपद्यमानो दान-सन्मानादिना संवर्ग्य विसर्जितः। ततो लावण्यसुन्दर्याः सन्निधिमगात्। अत्रान्त[4][रे प्रवि]-श्य कुट्टन्याऽभिहितम्–'पुत्र! प्रविश्यताम्, सुरूप आलापयतामालापपेशलोऽर्थिनां सर्वस्वदातेति गुणत्रयं भवदीयं मया त्रैलोक्यवि[5][ल]क्षणं सम्यगवगतम्, इदानीं तत् घटितस्य पौरुषमितरगुणानुसारि विद्यते न वेति मया[6] परीक्षितुं यत्नः कृतः। तदितरगुणेभ्योऽपि[7][F.108.B] पौरुषे विलक्षणोऽसि। धन्याऽहं यस्यास्त्वमेवंविधो जामाता' इत्य[भिधाय]..........[1] देवातिष्ठत्। तेनैव सहिता मान्यखेटाभिमुखं गन्तुमारेभे। ...................[2] तुं प्रवृत्ते। रत्नदत्तः क्रमेण गतश्च मान्यखेटा-भिधानं नगरं ....................[3] दीय प्रासादवित्तिकायाश्चित्रलेखाभिधानाया

१ दण्ड°। २ प्रावोधित.। ३ कृत्य°। ४ तदकारणाय। ५ राज्ञ। ६ माया।
७ १०९ अङ्काङ्कितस्य पत्रस्य त्रुटितत्वादिमान्येव वाक्यानि पठ्यन्ते।

गणिकायाः ......... ......[4]मयाऽवलगितव्यस्तत्स्वकीये निवासे स्थानं[1] मम दीयतामित्यभिधाय त ........ ... ...[5] [F. 109. A] अथापरेद्युस्तत्समक्षं[2] लावण्यसुन्दरीमवोचत्–'स्वनिर्वाहार्थं सन्निहितग्रामे ......... .......[1] लगिष्यामि । यस्य च राज्ञः सेवामहं अग ......... ...[2] त्या दिनचतुष्टयं मोचनकमस्ति ।' सा तु तच्छ्रुत्वा वज्राहतेव क्षणं .... ... .. .... .[3] त्येनास्य गच्छत इदमेव वक्तुं युज्यत इत्यवधार्य सा मोचनक .. ..... ..[4] या निर्गतेन नरपतिना चित्रलेखया सह सौधस्योपरि को .... .. . ........[5][F. 109. B] सर्ग्गिकेणैव रूपेणालङ्कृता व्यलोकि । तेन च चिरं निर्वर्ण्य संयोग..... . ..[3] नुचरः–'अपूर्वेयमत्रत्या न भवति । रूपयौवनलाव[1]ण्यादि सम्पन्ना च । तदद्यानेतव्या भवता' इत्यभिधाय प्रहितः स तु चित्र[ लेखा ] ......... .[4]तत्र च तत्सन्निधावेव तामपश्यत् । तत्रोपविश्य[2] चित्रलेखया सह क्षणमिव गोष्ठीं विधाय तस्यै कर्प्पूरादिसहितं तां .........[5]स्या दातुमारेभे । लावण्यसुन्दर्या च–'आस्ते ताम्बूलमि'[3]त्यभिधाय न गृहीतम् । ततः स चित्रलेखामभ्यधात्–'भद्रे ! केयं प्राघूर्णिका...... [6]वलगितुमागतस्यापरस्य बाँन्धवस्य[7][ ? ] इति ।' स तु श्रुत्वा रो[4]दितुमारेभे । ततश्चित्रलेखयाऽभ्यधायि–'भद्र ! किमिति रुदते ?' तेनाभिहितम्–'वस्तुद्वयं नश्यति लग्नम् ।' पुनस्तया–'किं तत् ?' इति पृष्टोऽसाव[5]-[F. 110. A] भ्यधात्–राज्ञा इयमद्य दृष्टा[8], दृष्ट्वा च स मामभ्यधात् 'यदियमानीयताम्, य[ दि नाया ]ति तदाऽस्याः कर्ण्णनासिकं छेत्तव्यम् । त्वमपि व्यापादयित[1]व्यः । तच्छ्रुत्वा लावण्यसुन्दरी भयचकिता समभवत् । ततश्चित्रलेखा चकि........[9]याताम-वोचत्–'भद्रे ! को दोषः, भवद्भर्ताऽपि त्वां मोच[2]यित्वा गतः । रक्षतां मालां( ? )' इत्यभिधाय कथङ्कथमपि प्रबोधिता प्रत्यप ...... .[10]केन च गत्वा राज्ञे निवेदितं यत्–'सा उत्कण्ठितैव स्थिता,[3]'यदेव मयोक्तं तदेव प्रतिपन्नं ।' तयोक्तं चैतदर्थमेव मया आत्माद ....... ...[11]न्यामेवं महाराजः सम्भावयति । राजा अनुगतवति[4] प्रदोषे विसर्जित-राजलोको वासभवनमगात् । सङ्गमकश्च तामा ......[12]स राजा तया सह स्मरकेलिसुखमन्वभवत् । अथ[5] [F.110 B] प्रभातप्रायायां रजन्यां सा निजभवनं जगाम । राजा तु द्रम्मलक्षमेकं वासांस्याभरणानि च प्रदाय तस्या गृहे सङ्गमकं[13] प्राहिणोत् । सा तु[1] द्रम्म-षोडशकमेकं गृहीत्वा तत्सर्वं विससर्ज । ततः सङ्गमकेना[14]भिहितम्–'अहो चित्रं किमेतत् ?' तयाऽभ्यधायि–'यावती भाटिस्तावतीमेवाहं गृह्णामि । यदि तु[2] मदीयमेवा-

---

१ निवासस्थानं । २ °द्युस्तमक्षं । ३ विनष्टान्यत्र ८–९ अक्षराणि । ४ विनष्टान्यत्र ७–८ अक्षराणि । ५ विनष्टान्यत्र ५–६ अक्षराणि । ६ विनष्टान्यत्र द्वित्राण्यक्षराणि । ७ बन्धस्य । ८ दृष्ट्वा । ९ विनष्टान्यत्र द्वित्राण्यक्षराणि । १० विनष्टान्यत्र ५–६ अक्षराणि । ११ विनष्टान्यत्र ७–८ अक्षराणि । १२ विनष्टान्यत्र नवाक्षराणि । १३ संगमिकं । १४ सगमिकेन ।

कारणकं मदीयमेव मोचनकमिति राजा प्रतिपद्यते, तदेतत् गृह्णामि ।' ततः सङ्गमकेन[1]
तस्मिन् कौतुके राज्ञे निवेदिते तेन च[(3)] तथैव प्रतिपन्ने, तत्रागत्य सङ्गमकः—'प्रतिपन्नं
राज्ञा, तद् गृह्यताम्' इत्यवादीत् । सा च तद्गृहीत्वा याचकादीनां त्यागे प्रायच्छत् ।
यथैकमहस्तथा दिन[(4)]त्रयं राज्ञा सह तस्या जगाम ।

अन्यस्मिन्नहनि देशीप्रेक्षणकाभिज्ञेति राजा तामाकारितवान् । सा तु 'आगमनदिन-
मद्य तस्य; तद्यदाऽसावागच्छति[(5)] तदा त्वयैतस्य हस्तिस्तम्भकस्य सन्निधीभूत्वा मम [मा]-
ला दर्शयितव्या[2]' इति निजानुचरीमभिधाय विहितशृङ्गारा राजकुलमयासीत् ।[(6)]
[F. 111. A] आगतां च नरपतिः— 'देशीप्रेक्षणकमस्माकं त्वया दर्शयितव्यम्' इत्य-
भाषत । सा तु 'तथा' इति प्रतिपद्य नर्तितुमारेभे । अथ प्रवृत्ते प्रेक्षणके यावत्तालं
भं[(7)]क्त्वा पृष्ठतोऽवलोकयति तावद्गजस्तम्भसमीपस्थां निजामनुचरीमपश्यत् । ततो
राज्ञो मुख[म]वलोकयाञ्चकार । राजा तु— 'विदितोऽभिप्रायः, मोचनक[(2)]-
मस्ति' इति तामवादीत् । सा तु विमुक्तधम्मिल्ला[3] धावन्ती स्वगृहमगमत् । राजा तु
तस्यास्तदाकूतमालोक्य जातकौतुकः सङ्गमकेन सहालोच्य—'कीदृशः स[(8)] पुरुषो
यस्मिन्नेवमियमनुरक्ता, असल्लज्जामपि परित्यज्यात्मानं विमुच्यापि प्रधाविता'
इत्युक्त्वा तद्वृत्तान्तं द्रष्टुं जगाम । ततस्तत्पृष्ठतो गत्वा यावज्जा[(1)]लगवाक्षकैर्निरीक्षते
तावदायान्तं रत्नदत्तमालोक्य सा गृहीतोदकपात्रा पादप्रक्षालनायोपससर्प । रत्नदत्तस्तु
तामन्यथारूपामालोक्य सुब[(5)]न्धुना सहेदमभ्यधात्—'भद्र सुबन्धो ! गृहवार्तायां पानीयं[4]
प्रविष्टम्' इत्यभिधाय पादप्रक्षालनप्रवृत्तां तामवोचत्—[(6)][F. 111. B]'लावण्यसुन्दरि !
पादौ मा प्राक्षीः । त्वं हि मम जननी भवसि ।' सा तु साकूतमवादीत्—'रत्नदत्त ! किमे-
तत् ?' रत्नदत्तस्तां पुनरवादीत्—'किमन्यत् ? त्वं हि मत्प्रभोर्दाराः,[(1)] तद्भवतु, पूर्यते,
उपविश्यताम् ।' राजा तु सङ्गमकेन सहालोच्य 'भद्र ! श्रुतान्यस्य वचांसि । तन्निजाकाराद-
प्यतिरिक्तः कोऽप्यस्य विवेकः । तद्भवतु दीय[(2)]ते दर्शनमस्य' इत्यभिधाय गवाक्ष-
मुत्सृज्य द्वारेण प्रवेष्टुमैच्छत् । स तु राजानं प्रविशन्तं स्वप्रतिभया परिज्ञाय—'देव !
सावधानैरग्रतः प्रवे[(3)]ष्टव्यम्' इत्यभिधाय दलकशस्त्रिकायां हस्तं दत्त्वा तमतर्जयत् ।
राजा तु तमवोचत्—'अनया सह तत्र समये तान्यक्षराणीदानीं त्वमूनि, तत्
किमेतत्[(4)] ?' सोऽभ्यधात्— 'भवान् मम शूरवण्ठो जातस्तदत्रेदमेवोचितम् । आत्मा
हि प्रभुः[5] प्रतिपाद्यते वल्लभायास्त्रियश्च । तदत्र देवस्य नोचितं स्थातुम् । स्वराजकु[(5)]लं प्रति
विजयः क्रियतां देवेन । देवमेवावलगितुमहमायातस्तत्रागत्य यत् किमप्या[(6)]-
[F. 112. A]देक्ष्यति देवस्तदहमनुष्ठास्यामि[6] ।' राजा तु तस्य पौरुषेणाचारेण च परि-

---

१ सगमिकेन । २ °व्य । ३ °धमेल्ला । ४ पानीयां । ५ प्रभोः । ६ °स्यामः ।

तुष्टः 'साधु साधु, यद्भवान् भणति तदेव क्रियते' इत्यभिधाय राजकुलम[1]यासीत्। तत्र गत्वा तदाकारणाय करेणुकां प्रतीहारं च प्राहिणोत्। ततस्तेन महता गौरवेणानीतः, आरूढ एव प्रवेशितः, सन्निधावुप[2]वेशनकस्वहस्तताम्बूलदानादिना सन्मानितः। पृष्टश्च—'किं जानासि?' सोऽप्यभापत—'सर्वाणि शास्त्राणि, निखिलाः कलाः, सर्वाणि विज्ञा[3]नानि च जानामि। सकृच्छ्रुतं च गृह्णामि। इदानीमेव किञ्चित् कौतुकं दृश्यताम्। चत्वारः कथकाः कथाः कथयन्तु, अहं सारीभिः क्रीडामि। यदि दायं वि[4]-स्मरासि, यदि च ताम्बूलं न भवति, यदि कथानिकासु विस्मृतिर्भवति तदा मया किमपि न ज्ञातं भवति।' राज्ञा तु कौतुकात्तथा कारिते स यथा प्र[5]तिज्ञातं तत्सर्वं कर्तुमारेभे। अत्रान्तरे लावण्यसुन्दर्या चिन्तितम्—'किमत्र साम्प्रतं यत्ताव[6] [F. 112. B]

*[ अत्रादर्शे ११३ अङ्काङ्कितं पत्रं विनष्टम् ]*

न समरभुवि संसाध्य मुहुर्मुहुरनृणो भवन् नृपतिप्रसादसुखान्यनुभवंश्च तेनैव नृपतिना सह सुखेन सुचिरमासाञ्चक्रे।

तत् पुत्रि! पु[1]रुषेष्ववितथमत्यन्तानुरक्ताः स्त्रिय आत्मानमर्थांश्च समूलकापं कषन्ति॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारम[2][ञ्जरी] कथायां स्त्र्यनुरागकथानिका अष्टमी समाप्ता।

## [ नवमी उभयानुरागकथानिका ]

इत्थमेकतरानुरागस्य स्वरूपमावेदितम्। इदानीमुभयानुरागस्य स्वरूपमावेदयामि[3]।

अस्त्यत्र भुवनतलविख्यातमपहसितामरावतीसौ[न्द]र्यदर्पमपहस्तितालकाविभवं उरगपुरं नाम नगरम्। तत्र च समरसिंहो नाम राजा। स[4] चतुरशीतेः सामन्तानां द्वादशानां च मण्डलेश्वराणां षट्त्रिंशतश्च राजकुलिकानां द्वासप्ततेराटविकपल्लीपतीनां च चतुर्विंशतेः कार्वटाना[5]-[F. 114. A]मेकविंशतेः कोङ्कणानां षट्त्रिंशतश्च वेलाकुलानामाधिपत्यमकरोत्। तस्य प्रतापावनतसकलराजमण्डलस्य वशीकृतसकलसामन्तस्य[1] [अ]शोकवती नामाऽतिप्रख्याताऽतिलब्धिप्रधाना दारिका रूपयौवनलावण्यैकायतनमस्ति। तस्याः सर्वे सामन्ताः सर्वस्वमपि प्रयच्छन्त्यक्षणि[2](?) तामुन्मुखाः प्रतीक्षन्ते। सा तु सर्वेभ्यः सर्वमपि तदुपादाय सामन्तच्छड्डकस्य प्रायच्छत्। स हि तस्याः प्राणेभ्योऽपि प्रियतमो राज्ञोऽपि स[3]भाप्रसादपात्रम्। सा तु क्षुरिकानाट्यं जगद्विलक्षणं नर्तितुं जानाति।

अथैकदा शरत्समयदुःसहानामहिमरोचिषस्तेजसां किमपि कि[4][मपि] स्पर्श-

---

१ °दानादिना। २ चतुराशीतेः। ३ साभा।

सुखतामारोपयत्यवरोपयति च कलमपालिका[1]गण्डफलकेभ्यः स्वेदसलिलजालकान्यनति-वहलतुहिनानिलोपहितमहिम[8]-[F. 114. B]नि हिमर्तुसमये, तुहिनकणकलितदलतया तुलितकान्तीन्युत्सृज्य कुवलयवनानि मुकुरितासु दलितद्वित्रमुकुलासु श्यामलतासु रति-माद[1]धाने मधुकरकुले, प्रियतमेनेव शरत्समयेन दूरमुज्झितासु म्लानमुखकमलकान्तिषु मृणालवलयमात्रमेवाभरणमाकलयन्तीषु[2] तुहिनकणकलितजलतया पाण्डिमानमुद्वहन्तीषु क्रीडोपभोगशून्यासु वियोगिनीष्विव प्रतिमासमानासु कमलदीर्घिकासु, विरहिज[3]न-हृदयभेदनाधिगतसारं विशीर्णतामागतमवलोक्य बाणासनमभिनवकेरलीकपोलस्थलश्या-माभिरामास्वधिकमुल्लसन्तीष्वसितेक्षु[4]यष्टिषु, भुवनविजयाय कार्म्मुकधियमाबध्नाति मकर-केतौ, बहलपरिमलानुमितगन्धतैलानुषिक्तद्विगुणितासितस्निग्धकान्तिषु सर[5]विलासभव-नेषु, निखिलकामिनीजनमनांस्यपहरत्सु हरिणीदृशामभिनवमरुवकाधिवाससुरभिषु विहु-रहारेषु, शरत्समयसु[6]-[F. 115. A]भगसम्पर्कमुत्सृज्य मलयजरसानुलेपनमीषदुपदर्शितो-ष्मणे कुङ्कुमाङ्गरागाय स्पृहयत्सु मिथुनमानसेषु, मुहुर्मुहुरुपहितदरदग्ध[1]घनसारसुरभिषु कालागुरुपरिचयोपचितपरिमलेषु प्रणयिनीकुचोष्मस्वादुस्पर्शतामासादयत्सु कामिनां सत-तसेव्यतामागते[2]षु विलासवह्निषु, गलितमकरन्दसम्पदां प्रियकसुमनसामासक्तिमुत्सृज्य कुसुमिताः प्रियङ्गुवीरुधः सरभसमाश्रयतः षट्पदानवलो[3]क्य विस्मयस्मितलवेष्विव कुन्द-लतिकान्तमुल्लसत्सु स्तोकस्तोकदलितकुड्मलेषु स्तवकोपान्तभागेषु अतनुतुहिनशीकरासार-वाहि[4]ष्वधिकतरोपहितजाड्येषु प्रवात्सु पवनेषु, अधि[कत]रजनितनिविडाङ्गसङ्गैरन्योन्य-निमग्नार्धतनुतयार्धनारीश्वरव्रतमिवाश्रि[5]तेषु निखिलेऽपि भुवनतले कामिजनमिथुनेषु, त्रिभुवनविजिगीषया सञ्चरमाणस्य मदननरपतेः सेनारजःप्रसर इवानवरतमाप[6]-[F. 115. B] तता समीरणेनोल्लासिते भूषयत्यखिलककुभामाननान्युपहृतदरदलितसरसकर्बूरमधुरिमन्यु-द्धुद्धरोध्रकुसुमजे रजःप्रकरे मधु[1]करसंवर्गितोन्निद्रकुसुमस्तवकशालिभिः कुन्दविटपकै-रुद्घाटितयौवनतयोच्छृङ्खलायाः शिशिरश्रियः कटाक्षैरिवाच्छुरितेषूपवन[2]भूभागेषु, अधिकमुल्लसत्यतनुतुहिने तुहिनगिरिमारुतोपजनितजडिमनि शिशिरसमये शीतिभियेवा-श्रयति दक्षिणां ककु[3]भमतिजरठरश्मावंशुमालिनि प्रत्यूषसमवनितलतल्पोत्थायमाश्रयत्सु कुकूलानलैरपहृतजडिम्नां प्रियतमाकुचोष्मणां[4] स्मार्यमाणेषु पथि पथिकसार्थेषु, दक्षिणा-शापथिकतां गतमात्मनः प्रमोदैकनिमित्तं मित्रमवगम्य परिम्लानाम्बुजमुखेष्वति[5]शुचेव शीर्यमाणेषु नलिनीवनेषु, अभिनवशुकपिच्छकोमलाभिरुद्गच्छतां सस्यानामतिघनतराभिः शु[6] [F. 116. A]चिभिर्निरन्तरस्थगिततयोल्लसदुन्मुखमयूखलेखाभिर्मरकतमणिशिलाभि-र्निचितास्विव विराजमानासु क्षे[1]त्रवसुधासु, विरलगन्धतैलाविलविरचितातिरमणीय-वेणिकासु बहलतरुमधूच्छिष्टस्थगितबिम्बाधरासु मसृणमसृणेन कश्मीर[2]जन्मना पिञ्जरि-

---

१ °पलिका° । २ °भिरामस्व° । ३ °सामामक्ति° । ४ पियङ्ग । ५ °लवेष्टिव । ६ °रिमन्युद्धुद्ध° । ७ °रोद्ध° । ८ कुकूला° ।

ततनुलतासु गृहीतनिबिडकूर्प्पासकासु शिशिरसमयव्रतमिव प्रतिपन्नासु विलासिनीषु, दरविदलितप्रियङ्गुमुकु(3)लमालिकालङ्कृतोन्नतस्तनभराणामभिनवरोध्ररेणुच्छुरितमण्डलाना-मन्तरान्तरार्पितमरुवकाभिः कुन्दकुसुमस्रग्भिरविरहित(4)केशपाशश्रियामङ्गनानां दृग्वि-क्षेपमात्रजनितसञ्चारे क्षोभयत्यखिलमपि भुवनं भृत्यतामागच्छत्यारोपितकुसुमकार्मुके मक(5)रलक्ष्मणि अतं[1]नुतुहिनजडतयोत्कम्पकारिषु वहत्स्वपि समीरणेष्वहर्निशं प्रज्वलिते सुखलेशमप्यनादधाने विरहिणीनां वि(6)[F. 116. B]रहदहने अतिप्रौढपाकतया विजितकिंशुकच्छदच्छविनि अतिघनतया निपीतशाखादलप्रकराणि निरन्तरमुद्वहद्भिः फलानि कर्कन्धूवनैरामोदिषु कु(1)ङ्कुमरसरञ्जितेष्विव मनांसि मदयत्सु भूविभागेषु, अभिनवतमालकिसलयानीलकन्दलैः कनकरसगौरप्रसवसम्भृतस्तवकहारिभिः(2)सिद्धार्थ-कैर्नीलीरसव्यतिकरितहरितालद्रव्यन्यस्तपत्रभङ्गेष्विव मरकतहरितकान्तिभिरतुच्छ-प्रतनुकुसुमगुच्छकोपरुद्धशिखरकैरन्तरान्तर(3)बद्धलघुफलस्तवकशालिभिः फेनलवला-ञ्छितस्य कालिन्दीह्रदस्य श्रियमुद्वहद्भिः कुस्तुम्बुरुस्तम्बवाटैरुपचितेषु तरुणशुकपिच्छ-सोदरच्छविभिर(4)तिस्निग्धैस्तुहिनजडितकरतया दिनकरेणोच्छादितावशेषैस्तमःपटलैरिव वस्तुकाके[2]दारैः क्वचित्तेषून्मदयत्सु चेतांसि ग्रामधानकच्छस्थल(5)विभागेषु, नानानृप-देशादिवर्ण्णनानुबन्धजनितमिथ्याभ्यसूयैः परस्परं कलहायमानैरतिशिशिरमरुत्सम्पर्क-जनित(6)[F. 117. A]जडिम्नामङ्गानामतिसुखस्पर्शतया च तापस्याहमहमिकया ज्वलनमिव प्रविशद्भिराबद्धमण्डलैः पथिकजनैः प्रतिसन्ध्यमासेव्यमानेषु प्रपाग्निषु, पु(1)ण्याग्निधूमैः स्थगितगगनतया वलयितप्रान्ततया च शीतार्त्या प्रावृतकम्बलेष्विवोपलक्ष्यमाणेषु ग्राम-धानेषु, अनायततया वासराणामतिदीर्घ(2)तया यामिनीनां बहुमतस्तनोष्मतया च प्रणयिनी-नामतिबहुमानमासादयति कामिजनस्य शिशिरसमयेऽत्यायत्सु रजनीषु नि(.)विनोदै[3]-शासितुमशक्यत्वात् तत्प्रेक्षादिदृक्षुः सौधं[4]मध्यवर्तिनः क्रीडामण्डपस्य मध्यवर्ती समरसिंहो नृपतिरन्तरमास्थानं दत्त्वा अशोकवतीमाका(4)रितवान् । सा तु प्रेक्षणकानुरूप-मतिविलक्षणं शृङ्गारं विधाय राजकुलं प्रति प्रतस्थे। चिन्तितं चानया 'यदि जीवितेश्वरो न पश्यति तद् वृथाऽयं शृ(5)ङ्गारो नृत्तं च। ततो यदि मदीयमेनं शृङ्गारं नृपं च च्छड्डुलः[5] पश्यति तदाहं द्रम्मशतप-(6)[F. 117. B]ञ्चकमूल्यानि पुष्पाणि तावन्मूल्यं च भ[ग]वते प्रयच्छामि' इति तया प्रयान्त्या वर्त्म[6]न्येकदेशस्थितस्याभ्यर्थितं[7]पूराभिधा[न]स्य गणपतेः प्रत्यश्रावि(1) । अवश्यं च तेन तत्र भवितव्यमिति पूर्णहृदया गत्वा नर्तितुमारेभे । ततस्तालं भंक्त्वा भंक्त्वा करणानि दत्त्वा चतसृष्वपि दिक्षु चक्षुर्विक्षिप्य नृत्यन्ती च्छ[8]ड्डुलं (2)तत्र नापश्यत्। ततो झगित्योजसः पतिताऽन्यमनस्का विच्छायवदना जीवितेनेव परि-त्यक्ता बभूव । ततो नर्तनोपाध्यायस्तामज्ञासीत् । सौष्ठं[9]वात्(3)च्युतेयम्, राजलज्जया

---

१ मतुनु° । २ °काकदारैः । ३ निर्विनोदै° । ४ सौध्य° । ५ छड्डलः । ६ °वर्त्म्यैक° ।
७ °र्थितसूराभिधान° । ८ छड्डलं । ९ सौधवात् ।

सामन्तादिमनुष्यलज्जया च नृत्याति लग्ना, इदं तु नृत्तमतिविपमं सौष्ठवैकसाध्यम्, इयं तु लज्जया सौष्ठवमन्तरेण नृत्य[1]न्त्यात्मानं शल्लिकाया उपरि प्रक्षेप्स्यति, अतो लोकोत्तरं पात्रं विनश्यति लग्नमिति विचिन्त्य राज्ञे न्यवेदयत्–'मद्वल्लभः प्रेक्षिष्यत इत्याशयेय[5]-मियदवधि सौष्ठवेनैव प्रवृत्ता, इदानीं तु स इह नास्तीत्यवगम्यान्यमनस्का सौष्ठवच्युता लज्जया नृत्यन्त्यात्मानं शल्लिकाया उपरि प्रक्षेप्स्यति। त्व[6]-[F 118. A]या जानताऽपि न कथितमिति देवो ममोपरि क्रोधं करिष्यतीति मया विज्ञप्तमिदम्। अतः परं देवः प्रमाणम्।' राजा तु तदाकर्ण्य प्रकाशमस्य–'भो नर्त[1]कोपाध्याय! महती रात्रि-र्वर्तते तत् संव्रियतां प्रेक्षणकम्' इत्यवादीत्। ततः क्षणं स्थित्वा शयनीयगृहमगात्। तत्राशोकवतीमाहूयाऽभ्यधात्[2]–'पापे! त्वया नास्मदीया लज्जा कृता, न चैतेषां परि-चितानां सामन्तादिमनुष्याणाम्। अतिप्रकटा जाताऽसि, वेश्यावृत्तमपीदं न भवति। तत् किमेतत्?'[3] ततः साऽभ्यधात्–'देव! ज्ञाताऽस्मि। किमिदानीं गोप्यते। रागवशात्त-न्नास्ति यन्न क्रियते। विरूपकं तु यन्मया नृत्तं तत्र देवो मामङ्कयतु मण्डयतु वा[4], सर्व-स्यैव प्रभवति देवः' इत्यभिहिते नृपतिः–'पापे! स्थानविच्तिका भवती, तद् इयति दूरेऽन्यदा नात्मा मोक्तव्यः' इत्यभिधाय प्राहिणोत्। किमियं[5] विधास्यतीति ज्ञातुं चरांश्च प्रेषयामास। सा तु राजद्वार्येव तस्या अविदिते च्छेड्डुलस्य चेटकैः प्रतीप्सिता स्वगृहमगत्वैव तदीयमन्दिरमगमत्। [6][F. 118 B]

[ अत्रादर्शे ११९ अङ्काङ्कितं पत्रं विनष्टम् ]

प्रसादमाकारकं च प्राहिणोत्। सोऽपि स्वानुचरेभ्यो राजप्रसादमाकारकं चागतमा-कर्ण्य 'क्व राजा क्व वयं किं च प्रसादस्याकारकस्य वा का[1]रणम्' इति स्ववयस्यैः सार्धं गोष्ठ्याऽभ्यभाषत। तद्वयस्यानां मध्ये केनाप्यवादि–'कौतुकिनो हि राजानो भवन्ति। सुभगेन किञ्चित् प्रयोजन[2]मस्ति, केनापि च कथिता भवदीयवार्ता भविष्यति, तद् गृह्यतां प्रसादः सन्मान्यतामाकारकः' एवमुक्तेन तेन–'एवं क्रियते' इत्यभिधाय शिरसा[3] प्रतीष्य राजप्रसादं 'कीदृगादेशः' इत्याकारकानवोचत्। तैर[8]वादि–'श्रुता देवेन भवदीया प्रसिद्धिरतः कौतुकाद् वयमाकारणाय प्रहि[4]ताः, तद् गम्यताम्' इत्युक्ते तैरेव सार्धं शनैः शनैर्यथासुखं गन्तुं प्रववृते। गच्छंश्च क्र–[5][F. 120. A] मेण कतिपयैरहोभिस्ताभिर्द्वात्रिंशता च वेश्याभिः सुरूपाभिर्वित्तयौ-वनशालिनीभिर्द्वात्रिंशता च वेलावित्तकैरनुगम्यमा[1]न उरगपुरं प्रापत्। अथान्येद्युर्दू-रादेव 'साधु साधु, स्थाने सुभगप्रवाद' इति राज्ञा निर्वर्ण्यमानरूपयौवनसौन्दर्यो [ स ] गत्वा आस्थानगतं नृप[2]तिमपश्यत्। कृतप्रणामश्च राज्ञा सम्भाषितः स्वसन्निधौ दापि-तासनः स्वहस्तदत्तताम्बूलः सविनयमुपवेशितः। क्षणमिव स्थित्वा व्यजिज्ञपत्[3]–'देव!

१ सौष्टवैक°। २ संवृयतां। ३ °वशातन्नास्ति। ४ राजद्वार्य्येव। ५ च्छेड्डलस्य। ६ सानु°। ७ रा। ८ तैरेवादि। ९ °मानो रूप°। १० °मुपवेस।

येन प्रयोजनेन वयमाहूताः स समयो वर्तते तदादिश्यतां यदनुष्ठेयम् ।' राजा तु विहस्य तमवादीत्– 'विदितवृत्तान्तोऽसि तद[?]नुष्ठीयतां यत् तत्रोचितम् ।' सोऽब्रवीत्–'अनुष्ठीयत इति काऽत्र भ्रान्तिः यदादिशति देवः[?] [F. 120. B] परं तत्र चैतन्यशून्यं वपुरेवास्ते इति स्वचैतन्यमपि तत्र निवेश्य यथादृष्टमनुष्ठास्यामि' इत्यभिधाय पादयोर्निपत्य निर्जगाम । ततो राज्ञा प्रद[1]त्तमावासस्थानं सम्प्रेष्य निजपरिवारं चतुर्भिस्तुडितालैरनुगतो विहिततत्कालोचितवेषोऽहमहमिकया सर्वस्वदानेनापि पण्याङ्गना[2]भिराहूयमानः सर्वा आवर्जयन् सर्वासामाशाः प्रयच्छन् वेश्यापाटकस्यान्तर्वम्भ्रम्यमाणोऽशोकवत्या भवनद्वारं जगाम । तत्र स्थित्वा स्वकीयैः[3] सह पेशलालापान् कुर्वाणो मत्तवारणकस्थितया मकरदंष्ट्राभिधानया कुट्टन्याऽनुगतयाऽशोकवत्या दूरादेव व्यलोकि । सा तु तं षोडश[4]वर्षदेशीयं निजरूपलावण्योपहासितमन्मथं दृष्ट्वा मातरमवादीत्–'मातर् ! नायमत्रत्यो युवा अदृष्टपूर्वश्च सर्वातिशायिरूपयौवनला[5]वण्यादिभिरुपेतः ।' माता तु झगिति तस्यास्तद् दृष्टिरागमाकलय्य चिरादवाप्तावकाशा तामवोचत्–'पुत्रि ! भगवती पृथिवीयम्, सन्ति सुरूपाणा[6] [F. 121. A] मप्यत्र सुरूपाः सुभगानामपि सुभगाः पुरुषानुबन्धाश्च पुरुषैरेव व्यावर्त्यन्ते; तदाकार्यतामयम्' इत्यभिहिते दर्शनमात्रेणैव जातात्यन्तानुरा[1]गा तमाह्वयत्–'भो प्राघूर्णकाः ! किमिति नागम्यते ?' स तच्छ्रुत्वा 'बाढमागम्यत' इत्यभिधाय सलीलं विकटं च तत्समीपमगात् । सा तु तद्दर्शने[2]-नैव क्षुभितेव मूढेवोन्मत्तेव सानुरागा तत्क्षणमभवत् । परित्यक्ताशेषक्षणा स्नाता तं स्नापयित्वा तेनैव सह निजविभवानुरूपमेकत्र भुक्त्वा[3] शयनीयमगात् । स तु सुन्दरस्तदा राज्ञः सकाशात् पत्तनिकामेकां निजानुचरेण याचयित्वा स्वसन्निधावानाययत् । तथा सा तेन निजवैदग्ध्यानुरूपं[4] रमयितुमुपचक्रमे यथा किं स्वप्नोऽयं किमुत मायेन्द्रजालं वा किमेतदिति किमपि नाज्ञासीत् । सुन्दरकस्तु प्रवर्त्य रतिव्यतिकरं तदीयेष्व[5]ङ्गेषु क्वचिद्बन्धान् क्वचित् पत्रच्छेदान् क्वचिद्भारतं क्वापि रामायणं करैर्निर्मापयामास । निर्माप्य चासृक्स्रुतिमतां तेषां नखपदानां त[6]-[F. 121. B]या पत्तनिकया तत्प्रतिबिम्बकानि जग्राह । सा तु विनिवृत्तरतिव्यतिकरा सुप्तोत्थितेव मृ[6] ... ........... मूर्च्छितोत्थितेवोन्मुक्तदिग्भ्रमेव भ्रमत्यक्ते[1]व ठक्कमूलिकामोहोत्सृष्टेव झगित्यभवत् । अचिन्तयच्च–'किं मयैतदकृत्यग्रास[7]....परया पापया विहितम् । अहो दुर्लङ्घ्या हतविधेर्विल[2] सितानां गतिरनतिक्रमणीयान्यवश्यं भाव्यान्यप्रतिविधेया नियतिर्यन्मदीय[9]........त्यनुरागस्यैवंविधा परिणतिः, तन्नियतमनुल्लङ्घ्या[3]भवितव्यता । तयाऽर्थलुब्धया पापकारिण्या नास्मि प्रतिबोधिता ।' इति चिन्तयं[10].... ........रजनीवापससार

१ °मनुस्वास्यामी° । २ न ज्ञासीत् । ३ तदेये° । ४ कर । ५ °मासी । ६ विनष्टान्यत्र षडक्षराणि । ७ विनष्टान्यत्र द्वित्राण्यक्षराणि । ८ विधेविल° । ९ विनष्टान्यत्र ४–५ अक्षराणि । १० विनष्टान्यत्र ९–१० अक्षराणि ।

[1]......प्रकटीव[4]भूव आस्वान्। सुन्दरकस्तु तस्याः पश्चात्तापकलुषितं हृदयमाकलय्य [2]..........................समर्प्य राजा[5]नं व्यजिज्ञपत्–'देव! अनुष्ठितो देवादेशः' इत्याकर्ण्य राज्ञा परितुष्टेन[3]... ..... ..[6][F 122. A]ग्रामसहस्रचतुष्टयस्याधिपत्यमस्य प्रसादीकृतम्। सा तु तथैव ततः प्रभृति[4]....................तव जानि ला[1](?) गयंती सविषादमासांचक्रे। राजा तु तां पत्तनिकामा[5].... ..पल्ल्युन्मूलनाय[6]. .. .... .......... तां गृही[2]त्वा गतस्तेनासावभ्यधायि–'यदयं प्रसादः प्रसार्य गृह्यताम्।' ततो महत्तमतिक[पैक][7].... [अभ्य]धायि–'किमेतदिति?' ततश्च च्छड्डुकेनोक्तम्–'अशोक[3]वतीं प्रति मदनुरागविघटनाय राज्ञः प्रपञ्चोऽयम्' इति। अथ तां पत्तनिकां प्रसार्य[8]......पश्यति तावत्किं पश्यति सर्वमन्यथा तत्संवृत्तमि[4]ति–'तथापि नहि मदीयानुरागस्यैवंविधः कपटविलसितैरन्यथाभावो भवति' इति निजसौभाग्यावलेपात् निखिलमप्येतद्व्यली[5]कमिति मन्यमानस्तिकपैकमात्रभावे–'भो महत्तम! त्वया तत्र गत्वेदमनुष्ठेयं[9]......तस्याकथयत्। [6][F. 122. B]प्रति योजनमात्रं च तोरणकेष्वश्ववारान्निरूप्य तं प्राहिणोत्। स तु गत्वा गृहीतपाशुपतव्रतस्तद्भव[1]नस्याग्रत इतस्ततो व्रजन्नशोकवत्या आत्मानमदर्शयत्। सा तु तं दृष्ट्वा–'मातः किमेतत् तिकपैकसदृशोऽयम्' इति मातरमभ्यधात्, दास्या च[2] तमाह्वयत्। आहूतायातं च तिकपैकोऽयमिति प्रत्यभिज्ञाय–'तिकपैक! किमेतत्?' इत्यवादीत्। तिकपैकस्तु तदाकर्ण्य प्रतिवचनमप्रयच्छ[3]न्नेव रोदितुमारेभे। निर्बन्धेन पृष्टस्तु–'पापीयानहं किं मया दुरात्मना पृष्टेन' इत्यभिधाय तूंष्णीं[10] बभूव। ततः सा साकूतमवादीत्–'तथापि कथ्य[4]ताम्' इत्युक्तः स कथयितुमारेभे। इतो गते दण्डे कच्छाधिपेन सह महान् समरसम्मर्दः समजनि। तत्र सर्वेष्वपि सामन्तेषु पलायितेषु मन्दरगिरि[5]रिव तं समरसागरं मिमन्थिषु प्रतिपन्थिनः प्रत्यभ्यपतत्। तत्र च तेषां प्रहारसहस्रविक्षतोऽपि[11] तानुन्मृद्नन् सुरसुन्दरी[6][F. 123. A]स्वयंवरसुखस्य भाजनं बभूव। अहं तु पापस्तत्र प्राणत्यागाक्षमतया हीनसत्त्वः पाषण्डमेतदङ्गीकृतवानस्मि। अथाशोकवती तद्विनिपातवच[1]सि श्रवणपथमनापतत्येव वनकरिणीव विद्युदाहता झगिति प्राणानुत्ससर्ज। तिकपैकस्तु तं वृत्तान्तं तोरणकस्थानस्थापितैरश्ववारैः च्छ[2]ड्डुलस्य व्यज्ञापयत्[12]। अत्रान्तरे नृपतिरास्थानगतः कोलाहलमशृणोत्। अपृच्छच्च 'किमेतत्' इति। ततो द्वाःस्थपुरुषैर्व्यलीकेऽपि तिकपैकात्[13]

---

१ विनष्टान्यत्र ३–४ अक्षराणि। २ विनष्टान्यत्र २१–२२ अक्षराणि। ३ विनष्टान्यत्र कानिचिदक्षराणि। ४ विनष्टान्यत्र २१–२२ अक्षराणि। ५ विनष्टान्यत्र २–३ अक्षराणि। ६ विनष्टान्यत्र २०–२१ अक्षराणि। ७ विनष्टान्यत्र ३–४ अक्षराणि। ८ विनष्टान्यत्र ३–४ अक्षराणि। ९ विनष्टान्यत्र ३–४ अक्षराणि। १० तूष्णीबभूव। ११ °विक्षितोऽपि। १२ विज्ञापयत्। १३ °पैकादि।

च्छ[3]ड्डुलवृत्तान्ते श्रुते हृदयं स्फुटित्वा अशोकवती मृता, इत्यागत्य कथिते, तदा-स्थानगतः सुन्दरको राजानं व्यजिज्ञपत्—'देव ! मया स्त्रीरत्नमीदृग्विधं विना[4] शितमिति मम स्थातुं न युज्यते। तदादिशतु मां देवस्तयो श्च प्रेम्णि क्षीरनीरयोरिव नान्तरमस्ति। किन्तु मया तस्याः स्वकौटिल्येन म[5]नोमोहमुत्पाद्य ईदृक्पर्यवसानमुत्पादितम्। तदि-दानीमिदमेव ममोचितं यत् प्राणाः परित्यज्यन्ते' इति। अथ[6] [F. 123. B] स राज्ञा बहुप्रकारं प्रतिबोधितोऽपि स्वदारैर्वेलावित्तकैश्च सह वह्नौ विविधभङ्गिभिरात्मानं जुहाव।

अत्रान्तरे च्छड्डुलोऽप्यश्ववारावेदितं वृत्तान्त[1]माकर्ण्य तोरणस्थापितैरश्ववारैरेकै-कैराहूता समेत्य तदीयवासभवनभित्तावशोकवतीमालिखितामालोक्योन्मत्त इवा-भाष्याश्लिष्य[2] च तच्चितासमीपमागत्य सुन्दरकचितास्थानं चापृच्छय—'असमद्भ्रातुः स्थानमिदम्, तत् साधुकृतमनेन' इत्यभिधायाशोकवतीचितास्थान एवात्मनश्चिता विर-चय्यात्मानं[3] च वह्नावुपससर्ज। राजा तु तेषां तदत्यद्भुतं वृत्तान्तमाकर्ण्य—'अहमेवैकः सर्वेषामेतेषां विनाशहेतुरभवम्' इति वि[4]चिन्त्य भगवत्या आशापुरायाः पुरतः शिर-श्छेत्तुमुपचक्रमे। भगवती तु तस्य सर्वातिशायि साहसमहेतुं त्रैलोक्यविलक्षणं चावलोक्य—'पुत्र ! [5]मा मैवं साहसं कृथाः, याच्यतां यदभिरुचितम्।' ततः स देवीमभ्यधात्—'देवि ! यदि प्रीतासि तदशोकवती-सुन्दर-च्छड्डुलाः सपरिग्रहाः पुन[6]-[F. 124. A]र्नवी-भवन्तु।' ततो दे[3]व्यैवमस्तु इत्यभिहिते सुप्तप्रतिबुद्धा इव त्रयोऽप्युत्तस्थुः। राजा तु—'युवयोरनुरागभेदः कर्तुं न युज्यत' इत्यभिधाय परितुष्टः च्छ[1]ड्डुलस्य तामेवाशोकवतीं प्रसादेन प्रायच्छत्। सुन्दरकस्तु तां यथाविधामौचित्यकारितां पौरुषं चालोच्य विधाय द्विगुणं प्रसादं राजानमन्व[4]क[2]रोत्। राजा तु प्राप्तदेवीप्रसादपरितोषनिर्भरः स्वभवनमागत्य सपरिग्रहः सुखेन सुचिरमासांचक्रे।

तदेवं पुत्रि ! बह्व्यः पुरुषा[3]नुरागिण्यो वेशवनिता वपुषा वित्तेन च विनेशुः। तदसत्समये रागो व्याघ्र इव दूरतः परिहरणीयः॥

इति महाराजाधिराजपरमेश्वर[1]श्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां उभयानुरागकथानिका नवमी।

---

१ तरा°। २ परित्यजत। ३ दिव्यै°। ४ राजानमकरोत्।

## [ दशमी सर्प्पकथानिका ]

अन्यच्च—वत्से ! अतिपीडिताः पुरुषाः को[1]पवशान्न तदस्ति यन्न कुर्वते । तथा श्रूयताम्—

अस्ति वत्से कौशाम्बी नाम नगरी । तस्यामवनिवनितासीमन्तर[6]-[F.124 B]त्नायमानायां श्रोत्रियो महाधनः समधिगतसकलविद्यः श्रुतधरो नाम ब्राह्मणः । तस्य श्रुतिस्मृत्युदितेन वर्त्मना संचरमाणस्य मध्य[1]मे वयसि विनयधरो नाम सूनुः समुदपादि । स च बाल्यात् प्रभृति यथावदधीतवेदोऽधिगतसकलशास्त्रार्थः षोडशवर्षदेशीयं वयः स[2]माससाद ।

अथ कदाचिन्निबिडतरशिशिरसम्पातसम्भ्रमादधिकपर्याकुलं निखिलमपि भुवनमालोक्य समुपजातकरुण इव तु[3]हिनर्तुमपहस्त्य मूर्तिमन्तमिव निजप्रतापमहिमकिरणमुद्दीपयति सकलर्तुचक्रवर्तिनि विजृम्भमाणे वसन्तसमये, रजनिच्छत्रधा[4]रिकयोत्क्षिप्यमाणे समुल्लसत्किरणशतशलाकामृत्यमितः प्रसर्प्पज्योत्स्नाप्रसरपटलप्रावृते धवलातपत्रश्रियमुद्वहति च[5]-[F.125. A]न्द्रमण्डले, इतस्ततो मन्दमारुतान्दोल्यमानप्रवरकेसरदलेषु धवलचामरलक्ष्मीमाश्रयत्सु विकचसितसरोरुहेषु, निर्जितनिखिलभु[1]वनस्य मकरकेतोर्लाक्षिकत्रसरवैजयन्तीष्विव प्रतिविपिनं वनराजिभिः समुल्लासितास्वशोककिसलयावलीषु, उत्कलिकानाकु[2]लचम्पकतरावप्यनुद्भिन्नभूताङ्कुरगर्भग्रन्थावप्यनुल्लसितकेसरामोदेऽप्यनपगततरुलतारूक्षभावेऽप्यविशददिङ्मुखेऽप्यन[3]तिमन्दमारुतेऽप्यनभिलक्ष्यमाणमधुकरकुलक्काणेऽप्याकुलयत्यहेतु भुवनतलं मधुप्रथमावतारे प्रथममुत्कलिकाकुलं भुवन[4]मुपजनयति; अनन्तरं सहकारकाननानि । आदावेव सततमनस्थोल्लसितरागं कामिनीनां हृदयमुपदर्शयति, परस्तादशोकतरु[5][F.125. B]वीथिकाः । प्रागेवानुरागवशाद् दयितं प्रति कामिनीनां नयनानि मुकुलयति, तदनु कमलिनीवनानि । प्रारम्भ एव विरहिणीहृदया[1]नां भेदमातन्वाने, परतः स्ववीरुद्गर्भग्रन्थीनाम् । प्रमुख एवान्धकारीकुर्वन्ति कामिजनहृदयानि, पश्चान्मधुकरकुलैः कुसुमकाननानि[2] । प्रौढिमागच्छति महिमनि मधुप्रभवे शनैः शनैरलक्ष्यमपचीयमानासु यामिनीषु क्रीडाकमलदीर्घिकासु च, तुहिनजडिमोप[3]हितं रूक्षभावमवलक्ष्यमुत्सृजत्सु शशधरकरेषु क्षितिरुहेषु च, धूम्रतामपास्यन्तीष्वलक्ष्यं दिक्षु मानिनीमनोवृत्तिषु वाऽलक्ष्यं प्रौढि[4]मुद्वहति दिनकरमयूखजाले स्मरशरनिकरे च, प्रियतमेनेव मधुसमयेन प्रसाधितायाः काननश्रियः स्वमवलोकितुमभिलष[5]न्त्या इवातिविमलपुष्परागरोचिषि सहकारतरुराजिप्रियवयस्यया परितः सज्जीकृतायां[6][F.126 A]मुकुरसम्पदि, प्रतिदिवसोपचीयमानां मित्रस्य समृद्धिमवलोक्य स्मितश्रियाऽलङ्कृतेषु कमलवनेषु, कुङ्कुमरसोन्मृष्टललनाकपो[1]लस्थलीच्छायानुकारितया कामिनां मनसिजज्वलनमुद्दीपयत्युत्तप्तकार्त-

१ °रक्तायमानायां । २ विपनं ।

स्वरकान्तिकमनीये शनैः शनैः स[मु]न्मिषति राजचम्प[2]कप्रसवनिवहे, मधुसमयसमा-
गमोत्सुकाया वनराजिलक्ष्म्याः काकलीगीतिभिरिव मदनधानुष्कस्य मौर्वीध्वनितैरिव
म[3]धुसमयोपकरणसम्पादनव्या[2]पृतायाः काननश्रियः प्रबलमणिवलयझङ्कृतैरिव मानिनी-
मानग्रहोन्माथपटुभिर्वसन्तसि[4]द्धस्य हुङ्कृतैरिव मधुकरकुलक्वणितैरुपहितक्षोभमुत्कण्ठामय-
मिवारतिगृहीतमिव रणरणकस्वीकृतमिव रहककाक्रा[5]न्तमिवाकल्पकाकलितमिव सकल-
मपि भुवनमाकुलयति मकरकेतौ,[6] [F. 126. B] मन्देष्वपि मदनदहनसन्धुक्षणं प्रत्यमन्देषु
चन्दनतरुगहनसम्पर्कादतिशिशिरेषु मानिनी[नां]मूलतो मानमुन्मूलयत्सु समुल्लसयत्सु
च स[1]न्निहितप्रियतमानामपि मदनविलसितानि दक्षिणेष्वदक्षिणेषु विरहिणां मलयमारु-
तेषु, चूर्णालकवलयमिव सरल[2]यत्सु मानकुटिलं मनः केरलवधूनां हृदयेष्वधिकसक्त-
म[3]प्यवधूनयत्सूत्तरीयाञ्चलमिव चोलमृगदृशां सन्तुव्यतिकरमवकिरत्सु धम्मि[4][5]ल्लमाल्य-
वलयमिवकुन्तलीनां प्रियतमापराधरजःकलुषितं चेतो म[5]न्देष्वप्यमन्दमुदीपयत्सु विरहिणां
मदनदहनं मलयमारुतेषु, वि[4]रहिणीकपोलस्पर्धयेवापाण्डुपीततामुद्वहति मधूकतरुकुसुम-
स्तवकनिवहे, कुसुममासक्षितिपतेर्विविधमणिमुकुट इव विरा[5]जमाने नीलपीतारुणरुचौ
कुर[6]वकस्तवके, प्रथमोद्गमगद्गदेष्वप्यभिनवसहकारकोरकास्वाद[6] [F. 127.A] विशदेष्वति
चिरकालकुण्ठकण्ठतया स्खलितेष्वपि स्पष्टमुद्घाध्यमानेषु पथिकजनमनांस्याधिकमुत्कण्ठुला-
न्य[7]प्युत्कण्ठयत्सु भुवनविजयिनः स्म[1]रनरपतेराज्ञाक्षरेष्विव दुरतिक्रमणीयेषु समुल्लसत्सु
समदकोकिलकुलक्वाणेषु, रमणीचरणतलता[8]डनसुखानुभवप्रमुदिते[2]षु विकासमायात्सु
निर्भरमशोकपादपेषु, कामिनीवदनमदिरासेकगण्डूषरसमवाप्य कोरकनिकरस्थलादुत्फुल्लकेषु
केसरतरु[3]षु, कुवलयदृशामतिचिराभिलषिताः समासाद्य कटाक्षच्छटास्तदपाङ्गसङ्गिन्या
लोचनप्रभयेव धवलितेष्वतिप्रमोदात् परं विकास[4]मायात्सु तिलकद्रुमेषु, चिरप्रार्थितानि
मदिरेक्षणानामासाद्य स्तनतटताडनानि विचित्रस्तवकपरम्पराभिरामतामाश्रयत्सु अति-
प्रभू[5]ततयान्तर्वोढु[9]मसमर्थेष्विव मुकुलस्थलाद्बहिः प्रसृतं प्रमोदमुद्वहत्सु कुरवकानोकहेषु,
इत्थं वसन्तसमये कामुकेष्विव दोहद[6] [F. 127 B.]माकांक्षत्सु प्रमदोद्यानद्रुमेषु,कस्तूरिका-
विरचिताभिरिवातिश्यामलाभिः पत्रावलीभिर्जनित शोभास्वधिको[10]न्मंदपिककुलध्वनिते[1]न
जनितमन्मथाश्वसितचीनांशुकेनेव मधुकरकुलेन विहितावगुण्ठनास्वभिसारिकास्विव कामिनां
रतिमुपजनयन्तीषु माधवीलता[2]सु, प्रतिप्रमदवनमनङ्गधनुषो निष्पतद्भिः शिलीमुखैस्ता-
डितेष्वधिकाधिकमन्त[11]रुन्मिषल्लोहितच्छविषु निसर्गकटुना प्रतिभयेने[3]व मलयपवनेनो-
त्कम्प्यमानेषु विरहिणीनां हृदयेष्विव शनैः शनैर्भिद्यमानेषु स्थलकमलकुड्मलेषु, त्रिभु-
वनमप्याक्रमितुमीहमान[4]स्य रागसागरस्य कल्लोलैरिवारोपितकामकार्मुककोटिकुटिलैरु-

१ °चंसपक° । २ व्यावृतायाः । ३ °मलयवधूनयगुत्तरीया° । ४ धम्मेल्लमां° । ५ मन्देष्वलयमन्द° । ६ कुडवक° । ७ °लान्युप्यु° । ८ °ताडण° । ९ °न्तर्वाढुमसर्थे° । १० °स्वधिका कोन्मद° । ११ °काधिकर्मतरुन्मिप° ।

छमद्भिः किंशुकप्रसवैः सर्वतः सततमापूर्यमाणेषु[5] [F. 128 A.] विपिनोदरेषु, दलित-द्विरदमदजलासारसौरभेण प्रसरता केसरामोदेन सन्निहितप्रियतमानामपि वासितानां केसरिणीव प्रति[1] भयमुपजनयति मलयमातरि[1]श्वनि त्रिभुवनमप्यभिद्रवयितुमितस्ततो निष्पतन्तीष्वतिविलक्षणासु मदनधानुष्कस्य हरितमणिनि[2]र्मितासु गुलिकास्विव प्रसभ-मलगन्तीष्वपि विरहिणां हृदि लगन्तीष्वतिमधुरध्वनिषु मधुकराङ्गनासु, अपरिचितास्वपि मृदुमधुरभाषि[3]णीष्वन्योक्त्यैव[2] मानग्रहग्रन्थिमुद्ग्रथ्न[3]न्तीषु दूतीष्विवानियुक्तास्वपि संचर-न्तीषु परभृतवधूषु, प्रियतमस्येव समीपवर्तिनः सहकारपाद[1]पस्य स्कन्धमालम्ब्यमाना-स्वतिगर्भभरालसतया कामपि कमनीयामाकृतिमुद्वहन्तीषु वसन्तलतासु, स्वयं विदलिते-ष्वपि विदलयत्सु[6] [F.128 B] विरहिजनहृदयानि अभिनवोद्गतेषु कामन्दमुकुरोत्करेषु, मधुप्रासिदुर्ललिताया अङ्कमारोहन्त्या काननश्रियः सालक्तकचरणमुद्रास्वि[1]व समुल्ल-सन्तीष्वयथायथमशोकपादपानामितस्ततः स्तवकपरम्परासु, शनैः शनैः प्रसर्पता मलय-पवनोनेद्दीप्यमाने व्यप[ग]तकोशयोपलक्ष्य[4][2]माणव्यक्तदलशिखिविधूमतया केवलविभा-व्यमानमिततानवच्छिन्नज्वाले भुवनवर्तिनो निखिलानपि विप्रयोगिनो दग्धुमुद्य[3]ते मदन-दहन इव सर्वतो विकासमागच्छति किंशुकवने, साङ्गार इव परितो विकचविक्षिप्तकुसुम-स्तवकैः सज्वाल इवातिस्निग्धारुणविततपल्ल[4]वप्रकरेण सधूमोद्गार इवोपरिभ्राम्यता मधु-पपटलेन मूर्ते मदनहुतभुजीव विरहिणां सन्तापमुपजनयत्यशोकद्रुमगहने, अ[5]च्छाच्छ[5] कुङ्कुमरसोन्मृष्टलाटललनानाभीसनाभिषु स्तोकस्तोकविततप्रतनुपत्रारपंक्तिपरि[6]किरितेषु सरनरपतेश्चक्रेष्विव कुसुममासेन[6] [F 129. A] प्रगुणीक्रियमाणेषु केसरप्रसूनेषु, दलितो-द्दाढहेमनिगडस्य भीषणरमणीयाकृतेः संचरन्तो वसन्तगन्धसिन्धुरस्योल्लसद्बहलमदज[1]लामोदमिव परितः समुत्सृजत्सु जठरफलपाकप्रौढि[8]रसतः प्रस्फुटत्सु सततमेलाफलेषु, अतिजरठचन्दनद्रुमस्कन्धसङ्गिनां स्वैरमित[2]स्ततो विसर[9]तां विषधराणामुद्भटविषश्वसन-संवलिते विषपवन इव निखिलमपि भुवनमाघूर्णयति मलयमारुते, मधुसमय[3]समागमो-त्सुकायाः प्रतिदिनमतिप्रचुरतयान्तर्वोढुमक्षमाया वनश्रि[10]योऽतिजरठे राग इव शनैः शनै-र्व्यक्तीभवति पाटलाप्रसूनस्तव[4]के, विजितत्रिभुवन[स्य] भगवतो मकरकेतनस्य मूर्तिमति यशःपुञ्ज इव धवलयत्यखिलमपि दिग्वलयमिन्दुद्युतिसोदरे सिन्दुवारमञ्जरी[5]जालके, मानिनीमानग्रहग्रन्थिविदलनाय प्रत्युप्तगारुत्म[11]तरलशकला[12]सु कनकयष्टिकास्विव मधुसमयेन प्रगुणीक्रियमाणासु[6] [F. 129. B] कुङ्कुमरसोन्मृष्टहूणतरुणीकपोलच्छविषु मधुकरावलीव-लयितासु शनैः शनैरुद्भिद्यमानासु कनककेतकीसूचिषु, प्रियवियोगताप[1]तप्तानां जलकेलि-निवारणायेव शनैः शनैर्विकचरक्तोत्पलवनव्याजात् प्रतिजलाशयं प्रसरत्सु मदनवडवानलेषु, सान्द्रकुङ्कुमो[2]न्मृष्टहूणतरुणी[13]कुचाभोगसुभगेऽन्तर्दत्तसान्द्रमदने गुञ्जाकन्दुक इव बालस्य

---

१ °मातरिश्विनि। २ °न्योक्तैव। ३ मुद्ग्रन्नतीषु। ४ °लक्ष्यमाण। ५ आच्छा°। ६ परिकिरितेषु। ७ °स्तोल-सद्द°। ८ °प्रौढिवसत.। ९ विचलतां। १० वनतिश्रियो°। ११ मारुन्मत°। १२ सकलान्सु। १३ तरुण°।

रुधोः खेलनाय वनश्रिया विरचिते हरति चेतांस्यशो[3]कतरुस्तबके, श्रमवशादनिभृतप्रवृत्त-श्वासोत्कम्पितस्तनतटाभोगासु मरकतमणिदण्डकाञ्चनोदञ्चितभुजतयान्तरान्तरोपलक्ष्य-माण[1]बहुमूलास्वितस्ततः प्रसृतदोलारयमयतया त[2]रलतारकास्वतिप्रबलचेला[3]ञ्चलमारुता-गम्यमानकपोलस्थलस्वेदसलिलासु[5]प्रियतमभुजाश्लेषमुत्थि[3]तास्वपि पतनभयकातरतया विषमजर्ज्जरोल्लसितकाकलीगीतिषु दोलाके[4]लिविलसितैः कामपि कम[6]-[F. 130. A]नीय-तामाकलयन्तीषु मदिरेक्षणासु, अन्यः कोऽप्येष नवो मधुव्यतिकरोऽनाघ्रातपीतेऽप्यखिल-जनमनांस्युन्मदयत्यभिनवे मधुव्यतिकरे[1]प्रौढिमागच्छति चास्मिन्ने[5]वंविधोपालम्भगर्भाः सर्वतः प्रावर्तन्त प्रो[6]षितभर्तृकाणामालापाः। निखिलमपि भुवनतलं जेतुमुद्यतस्य कुसु-मशा[2]यकस्य कुसुममासेन सज्जीक्रियमाणेषु निरन्तरमिषुधिष्विवोद्भिद्यमानकुसुमनिकरेषु कुसुमपादपेषु, ज्योत्स्नया प्रसाद्यमानमा[3]लोक्य शशधरमीर्ष्ययेव प्रतिवासरं तनिमागच्छ-न्तीषु रजनीषु, अतिनिबिडतरतुहिनार्तिव्यपगमादिव संकोचमुत्सृजत्सु[4] वासरेषु, अन-वरतनिपतद्विशिखसम्पातभीताभिरिव कामिनीभिः प्रतिभवनमभ्यर्च्यमाने विषमविशिखे, विरहिणीष्विवा[5]न्तःसन्तापग्लपितोत्पलविलोचनासु वृतमृणालवलयासु कमलिनीदलाव-रुद्धरुचिष्वापाण्डुपुण्डरीकवदनासु तरलितकलहा[6]-[F. 130. B]रनिकरकुरलवल्लरीषु तनि-मानमागच्छन्तीष्वपि कामपि कमनीयतामाकलयन्तीषु कमलदीर्घिकासु, परितः पथिक-हृदयानि निर्भिद्य प्र[1]तिविपिनं निर्यात्सु मदनभल्लेष्विव पल्लवनिकरेषु, तुहिनर्तुना सहैवा-पसरति रूक्षभावे शनैः शनैरमलगगनतलसंक्रान्तमिव मरक[2]तप्रभाश्यामलं नीलिमान-मुद्वहत्सु प्रमदवनेषु, इतो मधुकरध्वनितैरितो कोकिलविरुतिभिरितः सहकारमुकुलैरितो मृगदृशां[3]दोलाविलासगीतिभिरितो मलयपवनप्रेङ्खितैरितः कुसुमवीरुधां कुसुमोद्गतिभि-र्भुवनतलस्याप्यहेतुरणरणकमुत्पादयति व[4]सन्तसमये, अतिचिरप्रार्थितसङ्गमेन मधुना समागतासु तद्वियोगजनितमधिकं ध्यामलत्वमुत्सृज्य प्रसादमागच्छन्तीषु दिग्वधू[5]-[F. 131. A]षु विचित्रकुसुमवर्णां[6]शुकधारिणीषु प्रचलकिसलयासु लासकेनेव मलयमारु-तेन शनैः शनैरतिललितं प्रनर्त्यमानासु वनराजिषु, सुरू[1]पसम्पदा विजितमकरकेतुः सुभगः कलाकलापकुशलः समानशीलवयोभिराप्तैरनुगम्यमानो भगवतः कालप्रियदेवस्य मधुसमय[2]यष्टीयात्रायामात्तकमनीयवेषस्तमेव भगवन्तं प्रेक्षितुमयासीत्। स यावत् तस्यामायतनभुवि कौतुकात् परिभ्राम्यन्नितस्ततः क्षणमेक[3]मास्ते तावदकस्मात् त्रिभुवन-विजयैकभल्लिरिव भङ्गवतः कुसुमायुधस्य, इन्दुलेखा जननयनकुवलयानाम्, कमलसरसी-न्द्रियमधु[1]कराणाम्, विहरणस्थली स्मरविजयवारणस्य, मुखज्योत्स्नया दिवापि बद्धचन्द्रा-तपमिव गगनतल[5]-[F. 131. B]मापादयन्ती काचिदेका विलासिनी तं प्रदेशमाजगाम। ततः स तामालोक्य च मनस्यकरोत्—न खल्वस्यास्त्रिभुवनसर्गकारी प्रजापतिर्निर्म्मा[1]ण-

---

१ सरल°। २ °वेलाञ्चल। ३ °सुस्थिता°। ४ कलि°। ५ °न्नेवविधो°। ६ प्रेषित°। ७ कुरल°। ८ °गमनतल°। ९ नवमस्यकरोत्। १० तिमिन्र्माण°।

हेतुः यतस्तद्विनिर्म्मितयोपिद्विलक्षणमेव रूपमस्याः — इति विचिन्तयन्नेव तस्याः स दृष्टि-पथ[1]मवततार। सा तु तमवलोकयन्ती मृगीव[2] शरव्यतामगमन् मकरध्वजव्याधस्य। अजायत चानुरागसरसि कृतपदक[म]लिनी वोत्कण्टकिताङ्गयष्टिः। ततस्तयोः परस्परदर्शनोल्लसित-मद[3]नयोः[2] पल्लवप्रसर इवावर्धत स्वैरमनुरागः[3]। ततः स तां विज्ञातुमात्मनो वयस्यमति-विदग्धं विदग्धनामानं नियुज्य स्वगृहान् प्रति प्रतस्थे। वि[4]दग्धकस्तु तद्वयस्यायास्तर-लिकायास्तत्स्वरूपमवगम्य गत्वा च विनयधरस्य सविधमादितः सकलमाचचक्षे। विनय-धरोऽपि तस्यां वन्धक[5]दानाय तमेव प्राहिणोत्। अथ तयाऽनङ्गवत्या संगतस्य तस्य रतिसुखान्युपभुञ्जानस्य क्षणमिवाक्षीयत क्षपा। एवमस्य तया सह[6] [F. 132 A] रति-सुखमनुभवतो बहूनि व्यतीयुर्दिवसानि। क्षीणविभवः परं प्राणेभ्योऽप्यधिकमरोचत[4]ाथ सोऽस्यै। कुट्टनी तु तां परिहृतसविभवापरभुजं[1]गां तदनुरक्तहृदयामाकलय्य तं विनय-धरं निरधारयत्। स तु पुनर्व्याजमारचय्य प्राविशत्। सा च तिरस्कृत्य तिरस्कृत्य पुनः पुनरेनं निरधारयत्[2]। अनङ्गवती च भाटकिनीगृहे वयस्यासद्मनि च[5] तेन समगच्छत्। तां च तेन संगच्छमानामन्वीक्ष्य यदि पुनरप्येनेन सह संगत्स्यसे तदा मा भणिष्य[3]सि नाख्यातमिति अनङ्गवतीमतर्जयत्।

अथैकदा विनयधरः स्वनिवासादागच्छन् महान्तमतिभीषणं सद्योव्यापादितं सर्प्प-मपश्यत्। नूनमहमे[4]तेन स्वकार्यं साधयिष्यामिति कक्षायां[6] निक्षिप्य तदीयभवनस्य नातिदूरे स्थित्वा कस्यापि सुमित्रस्य पार्श्वादनङ्गवत्या ग्रहणकं दापितवान्[5]। आगाच्च शयितुम्। अथार्धरात्रे सन्निहितापवरके मत्तसुप्तायां कुट्टन्यां प्रविश्य तदीयशरीरस्योपरि मृतभुजङ्गं शनैः शनैः प्रसार्य तीक्ष्णनख[6] [F.132 B]च्छेदेन नासिकायां दंशमकरोत्। ततश्चीत्कृत्य प्रबुद्धायां कुट्टन्यां 'भक्षिता भक्षिताऽस्मि' इति ब्रुवाणायां झगिति[8] प्रविश्य पंचपैर्लकुटप्रहारै[1]स्तं भुजङ्गमताडयत्। ततो दासीभिर्झगिति प्रबोधिते दीपे सर्प्पमवलोक्य 'च्छेदं प्रयच्छामी'ति तेनाभिहिते—'प्रयच्छ प्रयच्छ' इत्युक्ते 'क्व प्रय[2]च्छामि' इत्युक्ते 'अत्रात्र' इत्यभिहिते मात्रेऽपि सहोष्ठां नासिकां चिच्छेद। ततो निवृत्तायां मरणभीतौ प्रभातायां च रजन्याम् 'उज्जीविताम्बा' इति वर्धापन[3]कानि प्रवृत्तानि। तथाप्येषा वध्यपटहध्वनिमिव वर्धापनकध्वनिमाकर्णयन्ती रात्रि[9]न्दिवमनुतप्यमाना अतिष्ठत्।

तत् पुत्रि! पीड्यमाना धूर्तास्त[4]था किंचिदपकुर्वन्ति यथा वक्तुमपि न पार्यत इति॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां स[5]र्प्पकथानिका दशमी समाप्ता।

१ °प्रथ°। २ °यो। ३ °राग। ४ °रोचत थ सो°। ५ र। ६ कक्षाय। ७ प्ररणकं। ८ झगित्य। ९ रात्रीन्दिव°।

## [ एकादशी मलयसुन्दरीकथानिका ]

अस्मन्मते च न कश्चिदवमाननीयः । अवमता हि पुरुषाः[1] तन्नास्ति यन्न कुर्वन्ति[6] । [F.133.A]

अस्ति पंचालेषु कन्यकुब्जं नाम नगरम् । तत्र निजदोर्दण्डमण्डलीखण्डितप्रचण्डाशातिमण्डलश्चण्डांशुरिव दुर्निरीक्ष्यमूर्तिः महेन्द्रपालो नाम राजा[1] । तस्य च राज्ञो विदग्धः स्निग्धो वित्तवानुदात्तस्त्यागी व्युत्पन्नः प्रणयी प्रतापसिंहो नाम महासामन्तः । स च प्रकृत्यैव नर्म्मशीलः कुरूपोऽतिरो[2]मश्च । स तु राज्ञा स्वदेशान् प्रति प्रहितस्तेषु कतिपयदिनानि स्थित्वा भूयोऽपि राजसेवार्थमागच्छत् । अभ्रंकपकूटकोटिजटिलितां वमग (?) सा[3]भ्यर्थनया परिहृता (?) केशतनूकरणोद्यमम्, आतपनिवारणायेवातिवहलनीलकान्तिभिर्दूरतरमुच्छ्रि[2]तैस्तरुभिर्विधृतनीलातपत्रमिव[1] विभाव्यमानम्, आः कथं मयि जीवत्यप्ययमस्मद्वर्ग्यपक्षच्छेदकारी कार्म्मुकं बिभर्तीति विचिन्त्यातिविचित्ररत्नप्रभाव्यतिकरमिषेण स तत[5]....च्छिद्य चापमुद्वहन्तमिवोपलक्ष्यमाणम्, उन्मदकरिगण्डकण्डूयनोत्कषणविदलितजरठसल्लकीत्वचा स्वैरमितस्ततः प्रसरता प[6][F.133.B]रिमलेन सुरभितदिगन्तम्, समदककरकामिनीदस्यमानकठककफलत्वक्तडवारवाचालितगभीरकुञ्जकुहरम्, अत्युन्नतशिखरकोटिसंसक्तशशधरबिम्बतया रजनिच्छत्रधारिकयोत्क्षिप्यमाणधवलातपत्रमिवोपलक्ष्यमाणम्, अतिबहलनीलयोत्तुङ्गया क्रमुकतरुखण्डप[2]रंपरया पुरःप्रधावमानसिकिरीसहस्रमिव संभाव्यमानम्, अभिनवप्रियङ्गुश्यामयोन्नतपयोधरया अधिकमुल्लसदिनमणिमेख[3]लया शशधराभिरामवदनया प्रियतम एवान्तरिक्षलक्ष्म्या सर्वाङ्गमालिङ्ग्यमानम्, अतिकठोरमरिचमञ्जरीजालकोपभोगपटुकण्ठकुह[4]राणां दात्यूहव्यूहानां कुहुकुहारवेण निधुवनक्लान्तशबरसीमन्तिनीनां मन्दमपि मदनमधिकतरमुद्दीपयन्तमधिकमधुरास्वान्दोलन[5]क्रीडा[5]........काकलीगीतिषु, श्लथवितीर्णकर्णतया सावहि-[6][F. 134. A] तोपलक्ष्यमाणमृगकदम्बकम्, शब्दशास्त्रमिव विविधधातुभिरुप[6]......रबहुवनोपचितम्, सर्वतो निपतदतिधवलनिर्झ[1]रसहस्रतयैकतः प्रवृत्तमन्दाकिनीस्रोतसमम[र]गिरिमिवोपहसितावातिकेन्द्रमिव (?) नागरङ्गोपहितश्रियम्, रघुपतिसैन्यमिव नीलनलाभि[2]रामम्, सन्ध्यासमयमिव प्रवृत्तनीलकण्ठम्, व्र[7]तिनमिव समुञ्जमेखलम्, सुकृतिनमिव विधुरविरहितोच्छ्रयम्, विधिमिव विविधविलसितोपहितविस्म[3]यम्, रविकरस्पर्शादुल्लसन्तीभिः स्फटिकमणिशिलाकान्तिभिर्दिवाप्युपजनितज्योत्स्नाशङ्कम्, कनकमयविकटकटककोटिसंसक्तमरुण[4]मणिविभ्रमं बिभ्राणमहर्मरीचिषो मण्डलमुद्वहन्तम्, गृहीताकल्पकमिव

---

१ पुरुषा । २ °मुच्छ्रितै° । ३ विनष्टान्यत्र द्वित्राण्यक्षराणि । ४ °रास्वन्दोलन । ५ विनष्टान्यत्र १२ अक्षराणि । ६ विनष्टान्यत्र ११–१२ अक्षराणि । ७ प्रतिनमिव । ८ °महिमा° ।

मदनबाणासनातिमुक्तकशरनिकरप्रचितसर्वावयवम्, स्निग्धा[5]भिरतिनिविडरागपल्लविताभिः कमनीयवयोभिर्विकचचम्पकच्छायाभिरामाभिः समदनाभिः प्रियतमा-[6] [F. 134. B]भिरिव वनराजिभिरुपगूढम्, आसमुद्रमनिवारितप्रसाराभिरच्छस्फटिकविशदकान्तिभिरनेकमुखम्, निर्गच्छन्तीभिः कीर्तिभिरिव सरिद्भिरभिव्याप्तसकल[1]भुवनतलम्, अतिदूरोच्छ्रितशिखरशेखरेभ्यो निपततां निर्झराणामेकदेशलग्नमतिशुभ्रं फेनपुञ्जमिव शशधरमुद्वहन्तम्, प्रतिनिशमत्युच्चशिख[2]राग्रान्तसंसक्तनक्षत्रतया पवनप्रेखोलनवशादन्योन्यसंघट्टस्फुटितवेणुनिर्गच्छदतुच्छमौक्तिकप्रकरमिवोपलक्ष्यमाणम्, निजविस्तारवैभवे[3]न निखिलामपि विश्वम्भरामवरुध्यैतस्याममान्तमम्बरतलमपि व्याप्तुमिव शिखरसहस्रैः कृतप्रयत्नं विमानमिव चाम्बरशिखरबाहुदण्डैः हरि[4]मिव वनमालयोपगूढम्, कमलयोनिमिवाधःकृतराजहंसम्, राम-रावणप्रधनमिव कपिशतोपरुध्यमानपलाशम्, मातङ्गसहस्रसंकुलमपि द्विजोप[5]सेवितम्, द्विजिह्वशतसंश्रयमपि स्निग्धसरलम्, अतिगुरुमप्यगुरुप्रायम्, सदक्षमप्यसदक्षम्, कान्तारागमयमपि प्रभूतनीरागम्, म्लेच्छजनव्याप्तमपि सदाचा[6]-[F. 135. A]रोपसेवितम्, असितसितशोणमणिकिरणप्रसरच्छलादुदयास्तशैलस्पर्धयेव तिमिरचन्द्रिकासान्ध्यरागान् विविधमणिनिर्म्मितान् वर्णशरानिव सर्वतः[1] सततसाकलयन्तम्, परितः प्रसृताभिरमलेन्द्रनीलमणिकान्तिभिर्वनविहरणक्लान्तानां मुग्धशबरसुन्दरीणां विश्रामार्थिनीनामस्थानेऽपि जनितवह[2]लवंशीवनभ्रमम्, उच्चावचमुत्सर्प्पिणीभिः कनकशिखरद्युतिपरम्पराभिरखिलशैलाधिपत्यपट्टबन्धमिवात्मनो दर्शयन्तम्, दिवसकरशशधरप्रभृ[3]तीनामपि तेजस्विनां पादोपसर्प्पणवितीर्णोदयतयात्यन्तविलक्षणं क्षितिधरत्वमात्मनः प्रकटयन्तम्, उल्लसन्मकरलाञ्छनामलकण्ठवलयोप[4]शोभिनीमुच्चैःस्तननाभिरम्यां प्रणयिनीमिव मेकलकन्यकामुत्संगेन बिभ्राणम्, सायंसमयमिवात्यन्तवर्धिष्णुच्छायम्, एतत्कथाकारमिव विराजि[5]तपरमारावनीपवंशम्, रत्नद्वीपमिव प्रकाशितसकलभुवनम्, प्रबलपवनतरलितपयोभिरुभयतो निपतद्भिर्निर्झरशतैः प्रचलद्भिः पक्षच्छेदै[3]-[F. 135. B]रिव त्रिदशपतितर्ज्जनाय दिवमिवोत्पतन्तम्, विकचनिर्चुलमञ्जरीविरचितावतं ❀[1].... . . ......... . ......... . ..[1] लितकेशपाशाभिरतिमुक्तककलिकाकल्पितमुक्ताफलाभिर्वन ❀ ...... . .[2] सुन्दरीभिरध्यास्यमानसहकारतरुगहनकुञ्जम्, सद्यः समुद्गत ❀... . . .[3] निपतन्निर्झरशीकरासारशिशिरितेषु विकचकेशरपरागपांसु ❀....... .. ..[4] सेवकैरिव सततसन्निहितैः करिकुलैरु ❀.... ......... ..........[5][F. 136 A] वाशेषसुखसम्पदां मन्दिरमुपभोगानामखिलकुलाचलैकबन्धुं ❀..............[1] गरे प्रख्याता ढोण्ढाभिधाना कुट्टनी प्रतिवसति। तया च मामये ❀......[2] मभूमिरतिविदग्धा

१ °दूरोच्छृत°। २ °तलवपि°। ३ °प्रवन°। ४ पसृता°। ५ क्लन्तानां। ६ कण्ठु°। ७ °सेतैः। ८ °निचुल°। ❀१ १३६ अंकाकितस्य पत्रस्य पूर्वार्ध एव प्राप्तः।

सुभगा लब्धिप्रधाना मलयसुन्दरीनामा दुहिता *.........[3] मागच्छत् । मलयसुन्दर्यास्तु राजकुलं गताया राजसेवया महत् *..............[4] मवलोक्य कथमेनमतिवाहयिष्यामीत्यचिन्तयत् । ततो *.... ..... .....[5] [F 136. B] यद्यप्यतीव सुभगा भवन्तस्तथा किमहं भवता परिहासस्थानम् ? । किमहमियद्दूरे जाता येन भवादृशामप्युपहासभूमिर्यदात्मानं स्ववल्लभया करजै[1]र्विपाटयितुमिवायाता इत्यभिधाय खोंगलगं कृत्वा शयितुमारेभे । स च मन्मथेनोन्मथ्यमानः कथंकथमपि तां क्षपां क्षपितवान्[2] । नातिप्रभातायां रजन्यामुत्थाय किंचिद्विलक्षः परिधाय वाससी गन्तुकामो यावदालोकयति तावत् तया प्रथमोत्थितया निजभगिनीतनयं ला[3]ल्यमानमपश्यत् । ततस्तामभ्यधात्–'कस्यायं दारकः ?' इति । ततस्तया खोरायमाणया 'मदीयोऽयम्' इत्यभ्यधायि । यदैव मदीयोऽयमित्येतद्वचस्त[4]स्य श्रुतिपथमगात् तदैव तां पातयित्वा व्याघ्र इव ललाटे नासिकायामुरसि कपोलयोर्बाह्वोर्जंघयोः पृष्ठे करजैरपाटयत् केशां[5]श्च बहून् लुञ्च्य गतवान् । दासीभिस्तं वृत्तान्तमाकर्ण्य प्रधाविता ढोण्ढा । तां चातिप्रसिद्धार्घवित्तिकां राजप्रसादवित्तिकां च तथा[6]–[F.137. A] विडम्बितामालोक्योन्मुक्तकेशी कुट्टनी पूत्कर्तुमारेभे । मलयसुन्दर्यपि प्रावरणेनात्मानं प्रावृत्य परिहृतबालका खट्वायां निपत्यावतस्थे । कुट्टनी[1] तु तदीयान् लुञ्चितान् केशानादाय रुदती पूत्कुर्वाणा चास्थानगतस्य राज्ञो निवेदयितुमयासीत् । ततोऽतिकुपितेन राज्ञा अभ्यधायि–'ढोण्ढे ! [2]त्वं प्रत्यभिजानासि कोऽसौ कस्य इति ?' ततो ढोण्ढयाऽभ्यधायि–'देव रात्रावागच्छन्तो गच्छन्तश्च कियन्तः प्रत्यभिज्ञायन्त' इति । इत्यभिहितेऽभ्यधायि रा[8]ज्ञा–'उच्यतां दण्डपाशिकः, कस्तत्र रजन्यामुषित ?' इति । तत आस्थानगतेन प्रतापसिंहेनोत्थाय विज्ञप्तम्–'देव ! अहं तत्र सुप्तः, परं मलयसुन्दर्यैवा[4]त्राहूयताम्, तत्समक्षमभिधीयमानं यतो नासत्यतामवगाहते ।' ततो द्विस्त्रिराहूता मलयसुन्दरी प्रावरणावृतशरीरा लज्जावनतमुखी तामास्था[5]नभूमिमाजगाम । आगतायां च तस्यां प्रतापसिंहेनाभ्यधायि–'यदैवाहमेतदीये [गृहे ?] गतस्तदैव प्रथमदर्शनानन्तरमेव सा काचिदावयोश्चक्षुः[6]–[F. 137. B] प्रीतिरुत्पन्ना या वक्तुमपि न शक्यते । प्रेम्णो हि[10]............पार्यते । तथा च प्रथ ... ... ... .......[1] परामृश्य वल्लभया करजैर्विपाटितमङ्गं किमिति... ...........त इत्यहमनेकप्रकारमुपालब्धोऽयुक्तमे............[2]पि दत्तानि । नखदशनपदान्यन्यदत्तानीति श.......यमपि न गणयन्ति । इदृशी प्रेम्णो गति.......... तोऽहं गन्तु[3]मिच्छामि तावदेनां दारकं लालयन्तीमपश्यम् । ..........तदा मदीयो-

---

१ °विपाद्यमिवयितुमायाता । २ लायमान° । ३ इत्यभिधायि । ४ °बालपख° । ५ तदीयानु । ६ लुञ्चीतां । ७ °सायामीत् । ८ कियत । ९ °यत । १० -१२८ अङ्काङ्कितस्य पत्रस्य त्रुटितत्वादिमान्यत्र वाक्यानि परिपठ्यन्ते ।

ऽयमित्यनयाभ्यर्थयाथि……मया सोढुं न[1] पारितम् । अतिप्रेमवशाद्रोसाण्यप्यनया नख………मया प्रेमवशा[2]त्सर्वमेतत्कृतमिदानीं यद्बुध्यते तद्देवः करोतु ।'…… राज्ञा विशिष्टं पारि[3]-[F. 138. A]तोपिकमस्य प्रादायि । सा तु निखिलस्या…… मताः कथं[1]कथं न विडम्बयन्ति ॥

इति महाराजाधि [राजपरमेश्वरश्रीभोजदेवविरचितायां शृङ्गारमञ्जरीकथायां मलयसुन्दरी (?) कथा] निका एकादशी स[2]माप्ता ।

---

## [ द्वादशी पम्मराककथानिका ]

न च धूर्तैः सह वृथा वैर…… ……

अस्त्यत्र[3] भुवनतले हस्तिनागपुरं नाम नगरम् । तत्र चा………उदात्तः शूरो धीरः समधिगतकला………रुचिर्नर्म्म[1]शीलः पम्मराको नाम राजा । स कदाचिदा-…………दा सपत्ने बुद्धिकरण्डकाभिधाने बुद्धि · · ….ल वृत्तान्ता[2]नि कौतुहलादा-लोकयितुं बभ्राम । अथैकदा…. …..प्राहिणोत् । स गुल्माभिधानपत्तनमपश्यत्[2] । [F. 138. B] ..[2]…… र्जतः को वा न रंजितः को वा न निस्तुषी[1]. … वास्तां रात्रिं तत्रैवातिवाह्याप्रभातायां[2] …… … अथ प्रबुध्य मकरंदिका यावत्पार्श्वमवलो[3] … …..तः कां दिशं वा गतः स इति । बकुलिकयाभ्य[4] … मित्यभिहिते यावत्प्रच्छदपटमालोक[5] [F. 139. A] ……..दधत् । मकरंदिका तु तदवलोक्य वि[1]………किमत्र बुध्यते[2]………किं क्रियते । ततो लडवकाभिधाना[3]… ……मान्यखेटनगरं गत्वा लावण्यवत्यभि[4]………नि वासांसि च स्नेहात्तस्मै प्रायच्छत्[5] [F. 139. B] यदा च कश्चिन्नायाति तदा तेनैव सह स्वपिति……[3]… तिष्ठतो गतानि बहूनि दिवसानि………[1] सौ वातूलो राजा गतः । कियन्तं काल-मस्माभिरेवैद्………र्वाहयितुं याति । ततस्तैराला …..य प्रहितः । स च क्वाप्य[2]-वधूतेनापि रूपेण तिष्ठति तत्र त्वया सावधानेनान्विष्य चानेतव्यः । ततः स तम-न्विष्य………म । अशृणोच्च यन्मक[3]रंदिकानाम वेश्या पम्मराकसत्तया तिष्ठतीति । तत्र च स यावत्तद्युदन्तं प्रष्टुमुपक्रमते तावत्त………मकरन्दिकया च महता गौर[4]वेण स्नपितो भोजितः परिधापितश्च । पञ्चषाणि दिनानि तत्रैव विश्रामं कारितः । ततः स विदि……[मान्यखे]टं गत्वा लावण्यवत्याः पश्चा[5]दश्वतरीमारूढं तदनुचरतामाश्रितं स्वं स्वामिनमपश्यत् । ततः स्वो………प्रणम्य व्यजिज्ञपत् किमिद[6] [F 140. A]

---

१ °भिवायि । २ १३९ अङ्काङ्कितस्य पत्रस्य त्रुटितत्वात्तस्मिन्निमान्येव वाक्यानि पठ्यन्ते ।
३ १४० पत्रस्य त्रुटितत्वादिमान्येव वाक्यानि पठ्यन्ते ।

सङ्गीकृतं देवेन । सीदन्ति प्रजा भिद्यन्ते राजकार्यसेतवः उत्कण्ठाविसंस्थुलश्चावरोधजनो वर्तते भवद्दर्शन.........श्च प्रकृतयः । तत्क्रियतां प्रसा[1]दः । अनुगृह्यन्तां बुद्धिकरण्डक-प्रभृतयः सचिवाः । ततस्तदाकर्ण्य सविस्मयं ससंभ्रमं लावण्यवती पृष्ठ ......... 'अये किमेतदित्यभिहि[2]तम्' । विहस्य सोऽब्रवीत्–'असत्योऽयं वटुर्मामप्रत्यभिजानन्नेवं ब्रवीति ।' ततः सुमतिर्विहस्यावोचत् कि..........णात्मानं गोपयति । ततो[3] लावण्य-वत्यपि वेगसर्याः समुत्तीर्याञ्जलिं बध्वा देव...... .. . [आग]म्यतामित्यभिधाय स्वगृहानं-नैषी ... .पोपचारैरुपचर्यातिगौ[4]रवेण तद्दिनमत्यवाहयत् । अथ स तेन सुमतिना ....... ....स्वदेशं प्रति नेतुमारेभे । पम[राक] [लाव]ण्यवत्या सादरं सस्नेहं[5] च विहितपरि..........वहु रत्ना[दि]वित्तजातं वितीर्य्य सुमति..........संप्रस्थितः सुमतिना[6]- [F. 140. B]स्यधायि–'देव वत्सगुल्मे[1] मकरन्दिका नाम वेश्या सा मया आगच्छता दृष्टा । तया च देवकीयोऽयमिति ज्ञात्वा मम गौरवातिशयो व्यधायि । सा च यतः प्रभृति[1] देवेन सह संगता ततः प्रभृति परिहृतापरपुरुषा मदनदहनेन्धनता-मुपगता सरसापि क्लिश्यन्ती घनस्येवोन्नतस्य देवस्य मार्ग्गमुद्वीक्ष्यमाणा[2] मयूरीवोद्ग्रीवा गमयति दिनानि क्षपयति क्षपास्तन्ममोपरि प्रसादं विधाय तन्मध्येनावश्यं देवेन गन्त-व्यम् । मया च सह तया कर्पूरिका नाम निजा[3]नुचरी प्रहिता । सा च देवस्य तदीयां विज्ञप्तिं विधास्यति । तां च पश्यतु देवः' इत्युक्ते तदनुतस्तामाहूयादर्शयत् । सा तु सविनयमागत्य राजानमि[4]ति व्यजिज्ञपत्–'देवो यतः प्रभृति तां परित्यज्य न ज्ञायते क्व गतस्ततप्रभृति तस्या विजृम्भितं जृम्भिकाभिः, विहसितं सितेन, उत्कण्ठितमु-त्कण्ठया, रह[5]कायितं रहक्केण, रणरणकायितं रणरणकेन, उद्वेल्लितं तल्लूद्वेल्लितैः, निश्वः-सितं निःश्वसितैः, उन्माथायितमुन्माथेन, रोमाञ्चितं रोमाञ्चेन[6] [F 141. A]अरतीयितम[3]-रत्या, हुंकृतमलीकहुंकृतैः, प्रलपितं प्रलापैः, उत्कम्पितमुत्कम्पितेन, अलसायितमालस्येन, जडितं जडतया, उद्भ्रान्तं विभ्रमैः, संभ्रान्तं सम्भ्र[1]मेण, चिन्ताकुलितायितं चिन्तया, विकृतं विकारैः, आकूतायितमाकूतेन, रेभितं रेभकेण, लज्जितं लज्जितैः, अपत्रपित[म]-पत्रपितेन, ग्रहिका[2]यितं ग्रहिकतया, ग्रहगृहीतायितं ग्रहेण, उन्मत्तायितमुन्मत्ततया, उन्मादायितमुन्मादेन, उच्छृङ्खलायितमुच्छृङ्खलतया, अनुरक्तायितम[3]नुरागेण, खेदा-यितं खेदैः, असुखायितमसुखितया, आर्तीयितमार्त्या, दुःखायितं दुखैः, सन्तपायितं सन्तापेन, तथापि रमणीयायि[4]तं रमणीयतया, कमनीयायितं कमनीयतया, शोभा-यितं शोभया, उल्लिखितमुल्लेखेन, उल्लसितं लावण्येन, रूपातिशयायितं रूपातिश[5]-येन, मनोहरायितं मनोहरतया, चमत्कारायितं चमत्कृतैः । तथापि चन्द्रलेखेव कृशापि कमनीया, लवलीलतेव पाण्डुताकलिताप्य[6]–[F. 141. B]नुपमच्छायावाहिनी, शून्यहृद-

१ °गुल्म । २ °मुदीक्ष्यमाणा । ३ अरिती ।

याप्यशून्या मन्मथेन, म्लानिमागताऽप्यनुपमकान्तिमती, वियोगिन्यपि हृदयमसुञ्चतापि तेन (त्वया ?) योगिनी,[1] ग्लानिमागताऽप्युज्जीवनी मन्मथस्य, कृशापि लावण्यपरिपोषिणी, अलंकारोज्झिताऽप्यलंकरणं मनोभवस्य, सन्तापकलिताऽपि दृक्तापहारि[2]णी, मनोभवोद्भ्रान्ताऽपि विभ्रमैकायतनम्, लासिका विलासानाम्, आयतनं विभ्रमाणाम्, रतिः शृङ्गारस्य, संकेतस्थानं हृदयहारितायाः, निवासो[3] रूपश्रियः, सदनमसादृश्यस्य, संप्रति च तस्या निर्दय किं ब्रवीमि ? दुःखमपि दुःखगृहीतम्, आर्तिरप्यार्तिमुद्वहति, खेदोऽपि खिद्यते,[4] उन्माथोऽप्युन्मथ्यते, असुखमप्यसुखस्य विषयतामापन्नम्, खेदोऽपि खिद्यते, मूर्च्छापि मूर्च्छति, आतङ्कोऽप्यातङ्कमुद्वहति, सन्तापोऽपि सन्तप्यते[5], श्वसितमपि निःश्वसिति, उत्कम्पोऽप्युत्कम्प्यते, उत्कण्ठाप्युत्कण्ठयते, रणरणकोऽपि रणरणकमाकलयति, तल्लुद्दे[6]-[F. 142. A]ल्लिरप्युद्वेल्लति, रहक्कोऽपि रहक्कितः, रेभकोऽपि रेभकाक्रान्तः, विरहोऽपि विरहितः। तथाप्यहं किमपि न ब्रवीमि। इदं तु जाने त्वद्रूपनिरू[1]पणैकरसिकं चक्षुः, त्वद्गुणाकर्णनदोहदिनी श्रुतिः, त्वन्नामगर्भाः सर्वेऽप्यालापाः, त्वत्प्राप्तिप्रत्याशैकबन्धनं चेतः, त्वत्संगमोत्कण्ठितोत्कण्ठु[2]लता, त्वत्प्रतिबिम्बचुम्बिता दिशः, त्वन्मयं भुवनम्, त्वदङ्गसङ्गमोत्कण्ठितान्यङ्गकानि। अन्यच्च नलिनीदलेषु सन्तापः, बन्धुवर्गे निरपत्रपता[3], सखीजने कार्श्यम्, परिजने चिन्ता, यद्यत्पुरास्वीकृतं तत् तन्निखिलमपि विभज्य केवलं श्वसितमेव स्वीकृतम्, तथाप्यतिप्रणयो मां मुखरयति[4]। त्वमेवास्याः प्रियोऽसीति वैशिकोक्तिः। साप्यतिशयकमनीयेति प्रलोपनम्। त्वमतिसुभग इति प्रत्यक्षस्तुतिः, त्वमेवैको रूपवानिति[5] पुनरुक्तम्, त्वं विदग्ध इति स्वरूपाधिगमनासंवः, सापि तवैवोचितेति स्वस्वामिनीप्रशंसा, अद्या[6] [F. 142. B]

*[ अत्रादर्शे १४३ अङ्काङ्कितं पत्रं विनष्टम् ]*

भवान् दूरत एव पूत्कुर्वन्नायातः, तत् कथं प्रतिभेदभयाद् गृह्णाति। यद्येवं निभृतं ददासि तत् किमिति नागृह्णाति तदर्प्यताम्' इत्युक्ते कलहंसको निभृ[1]तमेव ग्रहणकं समर्प्य राज्ञो न्यवेदयत्। राजा तु रजनीमुखे व्यतीते सुमतिसहायो गृहीतविशिष्टतरताम्बूलाद्युपचारेण कलहंसकेनानु[2]गम्यमानो मकरन्दिकाया गृहमगात्। ततः शय्यायामुपविश्य क्षणं स्थित्वा सुमतिमाह—'माधव ! गन्तव्यमस्माभिः' इत्यभिहिते माधवः प्राह[3]—'श्रीधर ! यद् भवते रोचते तत् क्रियताम्।' तत उत्तिष्ठन्तं बलात् तं मकरन्दिका व्यधारयत्। 'किमिति भवन्तः सांप्रतमेवायाताः प्रस्थिताश्च' इति मकर[4]न्दिकयोक्ते माधवेनाभ्यधायि—'साधु मकरन्दिका भणति, किमिति यूयमिदानीमेव प्रस्थिताः।' श्रीधरेणोक्तम्—'न यात्यस्याः पार्श्वेऽस्माभिः[5] शयितुम्। ततोऽस्माभिरिदानीमेवागच्छद्भिरेतत्प्रातिवेशिनीगृहे एतदाकर्णितं यदस्याः कश्चित् पद्मराकाभिधानोऽत्यन्त-

---

१ °पोषणी। २ °त्कण्ठि तो कुण्डुलता। ३ सेयमो। ४ प्रलोपनम्। ५ °कया।

